चौर्य्यं, चापल्यं, कौशल्यं, नैपुण्यं, पैशुन्यं, काव्यं, दायाद्यं, सासूच्यं, आर्हत्यं, दूतस्य भावः कर्म्म वा दूत्यं, दौत्यञ्च, वाणिज्यं, स्तेनस्य नलोपश्च स्तेयं, स्तैन्यञ्च। प्रजापतेर्भावः कर्म्म वा प्राजापत्यं, दाम्पत्यं, राज्ञोभावः कर्म्म वा राज्यं, सैन्यं, पौरहित्यं, सख्युर्भावः कर्म्म वा सख्यं, कपेर्भावः कर्म वा कापेयं, अश्वस्य भावः कर्म वा आश्वं, औष्ट्रं, शौकं, काकं, मायूरं, कौमारं, यौवनं, स्थाविरं, उद्गातुर्भावः कर्म वा औद्गात्रं, औन्नेत्रं, पौरुषं,, सौहृदं, सौहृद्यं, चापलं, दौर्हृदं, नैपुणं, कौशलं, श्रोत्रियस्य भावः कर्म्म वा श्रोत्रं शुचेर्भावः कर्म्म वा शौचं, मौनं, लाघवं, पार्थवं, हारीतकं, पाण्डुत्वं रामणीयकं, आचार्य्यकं, औपाध्यापकं, वैद्यकं, साहायकं, साहाय्यञ्च, मानोज्ञं, प्रैषरूपकं, वाणिज्यं, आभिरूपकं, मैत्रावरुणीयं, अच्छावकीयं। एवं तत्त्वं, सत्त्वमित्यादि।

Exceptions. अपवादाः।

सत्त्वं प्राण्यर्थेऽपि क्लीबं In the sense of a being is neuter, नानाजातीनि सत्त्वानि.

क्वचिदस्य पुंस्त्वमपि दृश्यते some use सत्त्व in masculine also in same sense यथा प्रणिपत्य भूधरारण्यचारिणः सत्त्वान् विज्ञापयामि।

भावे इमनिच प्रत्ययान्ताः पुंसि Those derived with इमनिच are in masculine यथा गरिमा, शुक्लिमा, योऽनुभूतः कुरङ्गाख्या मधुरिमा ; प्रेमशब्दस्तु वा क्लीबे while प्रेम is optionally neuter, प्रेम, प्रेमा। भावार्थे तल् (ता) प्रत्ययान्ता स्त्रियाम् Those derived with तल (ता) are feminine सत्ता, ब्राह्मणता &c अन्येषां क्लीब-

मपि दृश्यते We find also feminine form of the following. मधुरस्य भावः माधुरी, एवं औचिती, आनुपूर्व्वी, आहोपुरुषिका, अहमहमिका, वैदग्धी, वणिज्या, &c. स्वार्थिकप्रत्ययान्तानां तु प्रकृतिलिङ्गता चोरएव चौरः, कविरेव काव्यः, दैवतशब्दस्तु वा पुंसि। व्यवहारस्तु क्लीवएव पतिरेकं दैवतं वनितानाम्।

४२। चतुष्क पञ्चकादयश्चैकवचनान्ताः।

चतुष्कादयः क्लीवैकवचनान्ताः स्युः। चतुष्क, पञ्चक, षट्क, सप्तक, are generally found in neuter singular यथा तत्र स्यात् ऋतुषट्कं, पाणिनीयाष्टकं।

४३। तिङन्तात् रूपकल्पपौ क्लीवे।

अस्यार्थः। तिङन्तात् रूप, कल्पप् (कल्प) प्रत्ययौ क्लीवे स्तः। एकवचनञ्च।

The रूप and कल्पप् (कल्प) after a तिङ् are neuter singular. यथा पचतिरूपं, दीयतिकल्पं, पचति कल्पं &c. तिङन्तात्तरतमयोश्च यथाक्रमं तरां तमामिति रूपं भवति तर and तम after a तिङ् takes the form of तरां and तमां respectively यथा पचतितरां व्रजतितमां।

४४। सामान्यार्थे नपुंसकम्।

अविशेषोक्तौ नपुंसकं स्यात्।

When we say collectively or indistinctly we should use neuter gender. यथा सर्व्वमिदमनर्थं,—

धर्म्मः कामश्च दर्पश्च, हर्षः, क्रोधः, सुखं, वयः।
अर्थादेतानि सर्व्वाणि प्रवर्त्तन्ते न संशयः॥

४५। गोष्ठयुगषड़्गवान्ताः क्लीवे।

यस्मिन् सत्यं धृतिः ज्ञानं तपः शौचं दमः शमः।

ध्रुवानि पुरुषव्याघ्रे लोकपालसमे नृपे॥

त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः॥

Substantives derived from nouns whith the suffixes गोष्ठ, युग and षड्गव are neuter, as गवां स्थानं गोगोष्ठं, गोयुगं, हस्तिषड्गवं।

४६। धर्म्मार्थाण् प्रत्ययान्ताः क्लीवे।

धर्म्मार्थे विहितो योऽण् प्रत्ययस्तदन्ताः क्लीवे स्युः।

Substantives derived from nouns with the suffix अण् denoting धर्म्म quality or profession, are neuter यथा होतुर्धर्म्मः हौत्रं, एवं औद्गात्रं, माहिष्यं, पौरहितं, प्राजापतं, विशसितुः वैशसित्रं, विभाजयितुः वैभाजयित्रं।

४७। छान्दोग्यादयोण्यन्ता क्लीवे स्युः।

The words छान्दोग्य &c derived with Suffix ण्य denioting quality Anusana (शास्त्र) or collection &c. are neuter. यथा यथा छान्दोग्यं, औक्थिक्यं, याज्ञिक्यं, वाह्वृच्यं, नाट्यम्।

स्त्रीपुंसयोः।

Substantivos having two genders (fiminine and masculine). The following substantives may be used in both masculine and feminine genders.

१। गो, मणि, यष्टि, मुष्टि, पाटलि, वस्ति, शाल्मलि, त्रुटि, मसि, मल्लक, ऊर्म्मि, वराटक, स्वाति, वर्णक, मनु, मूषा, सृपाटी, कर्कन्धू, शाटी, कटि, कुटि, मरीचयः।

गो शब्दस्यार्थभेदे लिङ्गभेदः तथाहि गोर्नादित्ये, बलीवर्द्दे, किरणक्रतुभेदयोः। स्त्री तु स्याद्दिशि, भारत्यां, भूमौ, च सुरभावपि।

मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च इत्यमरः (२।९।९३) आदि शब्दाद्विद्रुमेऽपि चेति तट्टीका। स्त्रियां ङीषन्तोऽपि मणी, यष्टिः लगुड़ः। मुष्ट्या तु बद्धया सरत्निः, अरत्नि स्तु निष्कनिष्ठेन मुष्टिना (अम. २।६।८६) मुष्ट्या, मुष्टिनेति निर्देशेन मुष्टिर्द्वयोरिति ज्ञापितम्। पाटलिः वृक्षभेदः, वस्तिर्नाभेरधोर्द्वयोः। शाल्मलीर्द्वयोः (अम. २।४।४६) शाल्मलिः शाल्मली शाल्मलश्च। षष्टिवर्षसहस्राणि वने जीवति शाल्मलिः। अमरमते त्रुटिशब्दः स्त्रियामेव यथा स्त्रियां मात्रा त्रुटिः (अम. ३।१।६२), त्रुटिः स्त्री स्यात् कालेऽल्पे संशयेऽपि सा (अम. ३।३।३७), मसिर्द्वयोरिति चैकाक्षकोषः, अमरमते मसीशब्दस्य स्त्रीत्वमेव तमसी मसी, (अम. ३।७।१०)।

मल्लकः पुष्पवल्लीभेदः स्त्रियान्तु मल्लिका। ऊर्म्मि र्वा स्त्रियां वीचिरित्यमरवचनात् वीचिरपि वा स्त्रियामिति ज्ञायते, अन्ये तु ऊर्म्मिरेव वा स्त्रियां, वीचिस्तु नित्यं स्त्रीति वदन्ति। वराटकः कपर्दकः, स्त्रियान्तु वराटिका—वराटिकोपक्रिययापि लभ्यान्, तारा वराटानिति च नैषधचरितम्। स्वाति नक्षत्रम्, वर्णकश्चन्दनं विलेपने चन्दने च वर्णकं पुंनपुंसकमिति रभसः। वर्णकश्चारणे स्त्री तु चन्दने च विलेपने, द्वयोर्नील्यादिषु स्त्रीस्यादुत्कर्षे काञ्चनस्येति मेदिनी। मनुर्मन्त्रः स्वायम्भुवादिस्तत्पत्नी च, मूषा तैजसावर्द्धनी, खपाटिः परिमाणभेदः। कर्कन्धूर्वदरी, शाटी पटभेदः; कटिर्देहावयव, कुटी गृहकोष्ठकः।

२। द्वयोः भुजबाहू इत्यमरः। (२।६।७४। भुज and बाहु are masculine and feminine, सिन्धुर्ना सरिति स्त्रियां सिन्धु, sea masculine ; in the sense of a river feminine, नदविशेषे पुंसि when it means the Indus is masculine also.

३। अपत्य प्रत्ययान्ताः।

अस्यार्थः—अपत्यप्रत्ययान्ताः स्त्रीपुंसयो स्तः।

Substantions derived from nouns with तद्धित suffixes denoting one's own children, are both masculine and feminine.

यथा उपगोरपत्यं, पुमान् औपगवः, स्त्री औपगवी एवं वैदेहः, स्त्री वैदेही, गार्ग्यः, गार्गी।

४। द्विचतुः षट्पदोरगजातिभेदाः।

अस्यार्थः—द्विपदश्चतुष्पद षट्पदवाचिनो भुजगवाचिनश्च जाति भेदाः स्त्रीपुंसयोः स्युः।

Words meaning classes of animals which have either two, four or six feet and that of snakes which have no feet at all, are both masculine and feminine.

द्विपद जातिभेदो यथा—मानुषः पुमान्, मानुषी स्त्री, ब्राह्मणः ब्राह्मणी, शूद्रः, शूद्रा। चतुष्पद जातिभेदो यथा—मृगः, मृगी, हयः, हयी ; षट्पदजातिभेदो यथा—भृङ्ग, भृङ्गी, भ्रमर, भ्रमरी। उरगभेदो यथा—उरगः, उरगी ; भुजगः, भुजगी ; सर्पः, सर्पी।

५। पुमाख्याश्च स्त्रीयोगैः सह।

अस्यार्थः—स्त्रीयोगैः सह पुमाख्याः पुन्नामानि स्त्रीपुंसयोः स्युः।

Words, by which males and their respectives wives are denoted are both masculine and feminine. इन्द्रः, इन्द्राणी

(wife of Indra), भवः, भवानी ( wife of भव ), मातुलः, मातुली मातुलानी च Wife of maternal uncle, शूद्रः, शूद्री (wife of Sudra न शूद्री क्षत्रिया भूयात्, शूद्रा ( शूद्रजातीया योषित् (woman of Sudra class ) शूद्रा भार्य्योपदिश्यते । महाशूद्रा (a great Sudra woman) महाशूद्री (आभिरी cowherdess आभिरी तु महाशूद्री-त्यमरः) क्षत्रियः क्षत्रियी (wife of a क्षत्रिय ), क्षत्रियाणी (aa woman of khastriya class) वैश्यः वैश्यी wife of a वैश्य) वैश्या (a woman of vaisya class) अर्य्यः अर्य्यी (wife of a vaisya) अर्य्या अर्य्याणी (a woman of vaisya class). उपाध्यायः उपाध्यायानी (wife of tutor) उपाध्याया (a female tutor), आचार्य्यः आचार्य्याणी ( wife of preceptor ) आचार्य्या ( a female preceptor)

स्त्रीनपुंसकयोः ।

Substantives which are used in feminine and neuter genders.

१ । भावक्रिययोः ष्यञ्, वुञ् ।

अस्यार्थः—भावे, कर्म्मणि च वर्त्तमानः ष्यञ् ( त्यण् ) प्रत्ययः वुञ् (इकण्) प्रत्ययश्च स्त्रीनपुंसकयोर्वर्त्तते । Substantives in ष्यञ् त्यण् or वुञ् ( इकण् ) denoting merit or action, are optionally in feminine and neuter genders.

ष्यञ् (त्यण्) प्रत्ययो यथा—उचितस्य भावः औचित्यं, औचिती च , मित्रस्य कर्म्म मैत्रं ; मैत्री वा एवं सामग्र्यं, सामग्री, आर्हत्यं आर्हती, माधुर्य्यं माधुरी, वैदग्ध्यं, वैदग्धी, आनुपूर्व्यं, आनुपूर्व्वी । इत्यादि वुञ् (इकण्) प्रत्ययो यथा—मिथुनस्य भावः कर्म्म वा मैथुनिका, मैथुनकं । इत्यादि ।

२। सेना, छाया, शाला, सुरा, निशा: ॥

एता: षष्ठ्यन्तात् परा: क्लीवे वा स्यु:।

सेना &c. after genitive in षष्ठीतत्पुरुष compound are feminine and neuter. यथा देवानां सेना देवसेनं, देवसेना वा; गोशालं, गोशाला वा; यवसुरं, यवसुरा वा; श्वनिशं श्वनिशा वा; ततश्च नञ्तत्पुरुषे कर्म्मधारये वा नैष नियम: प्रवर्त्तते This rule does not apply to negative compounds with अ as well as to nominal compounds. यथा अच्छाया, परमसेना, महाशाला &c. वहुत्वे तु छायाशब्दस्य क्लीवत्वमेव But छाया conveying abundance is always neuter इक्षुच्छायं (shade of a sugar cane plantation).

३। आवन्नन्तोत्तरपदद्विगुश्चापुंसि ॥

नश्च लुक्।

आवन्तोत्तरपदद्विगुरन्नन्तोत्तरपदद्विगुश्च पुंसि न स्यात्। नकारस्य लुक् च।

Dwigu compounds ending in आ or अन् are never in masculine gender and consequently they are feminine and neuter, and words ending in अन् reject न्. also आवन्तो यथा पञ्चखट्टं, पञ्चखट्टी; अन्नन्तो यथा पञ्चतक्षं, पञ्चतक्षी।

४। द्वयत्रयोभयचतुष्टयादिशब्दा: स्त्रियां क्लीवे च।

अस्यार्थ:—द्वयादय: स्त्रियां क्लीवे च स्यु:। एकवचनान्तश्च

द्वय, त्रय, उभय and चतुष्टय &c. are generally found as substantives in feminine or neuter singular द्वयं गतं सम्प्रति शोभनीयतां, द्वयी न: परमा गति: मुनित्रयं नमस्कृत्य,

त्वय्यास्ताता यस्तवायं तनूजः, अतद्द्वयोजित्वरसुन्दरान्तरे, किमु तत्र चतुष्टयं, चतुष्टयीरचणसौविदल्लाः, उभयमानशिरे वसुधाधिपाः ॥ १

पुंनपुंसकयोः ।

Substantives having two genders, masculine and neuter.

१ । शेषः ।

उक्तादन्यः शेषः । अत्र यः शब्दो यत्रार्थे यल्लिङ्गक उक्तस्तद्भिन्नार्थे स पुन्नपुंसकयोर्ज्ञेयः । यथा शङ्खपद्मौ निधिवाचिनौ पुंसि कम्बुनलिनवाचिनौ तु पुंनपुंसकयोः ।

Words which are recited of particular gender in a particular sense, are to be understood in masculine and neuter genders besides that sense. As for example. शङ्ख and पद्म (meaning a निधि) are masculine but when they mean a shell or a lotus respectively may be used in both masculine and neuter genders.

२ । अर्द्धर्चादयः ।

अस्यार्थः—अर्द्धर्चादयः क्लीबे, पुंसि च स्युः ।

The words अर्द्धर्च &c. are masculine and neuter. ऋचोऽर्द्धं अर्द्धर्चः, अर्द्धर्चं एवं शतमानं शतमानः अष्टापदं अष्टापदः । अमरसिंहेन अर्द्धर्चादय एवं गणिताः—

अर्द्धर्च पिण्याक कण्टकाः । मोदकस्तंडकः शाटकः कर्पटोऽर्व्वुदः । पातकोद्योगचरकतमालामलकानड़ कुष्टं मुण्डं शीधु बुस्तं क्ष्वेड़ितं क्षेमकुट्टिमम् ।

सङ्गमं शतमानार्म्म शम्बलाव्यय ताण्डवम् ।

कवियं कन्द कार्पासं पारावारं युगन्धरम् ।

यूपं प्रग्रीव पात्रीये यूषं चमस चिक्कणौ ।

पाणिनिमतेऽन्येऽपि घृतादयः शब्दाः सन्ति, यथा घृत, भूत, मुस्त, च्वेड़ित, ऐरावत, पुस्त, लोहित, शृङ्ग, अर्घ, निदाघ, उद्यम, शल्य, दृढ़, व्रज, कुञ्ज, कुथ, कूर्च्च, प्रस्थ, पुच्छ, कवन्ध, औषध, आयुध, दण्ड, मण्ड, खण्ड, शव, सैन्धव, पार्श्व, आकाश, अङ्कुर, काश, कुश, कुलिशाः।

अर्द्धर्च्चादिषु घृतादीनां परित्यागे कारणमाहाऽमरसिंहः—

अर्द्धर्च्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम्।

तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत्।

Amara Singha avoided घृत &c, and showed his reasons—

As the use of घृत &c. in the masculine gender is found in the Veda only so I did not notice them in this class. But if any one find their masculine use even in Laukinka literature then he might apply rule I शेषवत् to them। आदि पदात् कल्कोऽस्त्री घृततैलादिशेषे दण्डे विभीतकेऽपि च पिणाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोरित्यादीनां संग्रहः।

त्रिलिङ्गकाः।

Substantives which might be used in three genders.

१। त्रिषु वच्यमाणाः।

The following substantives are used in three genders.

पात्र, पुट, वाट, कुवल दाड़िमाः अव्यय कति युष्मदस्मदः। षान्तानान्ताश्च संख्याः। सर्व्वादीनि सर्व्वनामानि, गुणवाचकाः। कर्म्मणि कर्त्तरि च विहिता कृत्यप्रत्ययाः। करणाधिकरणयोर्ल्युट (टन) प्रतययान्ताश्च। एवमन्येऽपि पात्रं, पात्रः पात्री। पात्रामत्रे त्रिष्विति मेदिनी—

पात्रन्तु कूलयोर्मध्ये पर्णे नृपति मन्त्रिणि ।
योग्यभाजनयोर्यज्ञ भाण्डे नाट्यानुकर्त्तरि ॥ इति हेमः ।
वाटः पथि, वृतौ वाटं वरण्डे गात्रभेदयोः ।
वाटी वास्तौ गृहोद्यानकट्योरिति हेमः ।

कुवलं बदरीफलं कुवलं चोत्पले मुक्ताफलेऽपि बदरी फले कुड्मले मुकुरे पुंसि न द्वयोर्नरकान्तर इति मेदिनी । दाडिमः दाड़िमं दाड़िमी इति वियोगिनीमैक्षत दाड़िमीमसौ इति नैषध-चरितम् ।

अव्यय, कति, युस्मदस्मदां त्रिषु लिङ्गेषु चैकरूपतैव । कतिः पुरुषाः, कति स्त्रियः, कति फलानि । एवं सोऽहं साऽहं तदहं इत्यादि षान्तनान्तसंख्यावाचकानामपि त्रिषु लिङ्गेषु चैकरूपता षान्तसंख्या यथा षट्पुरुषाः षट् स्त्रियः, षट् फलानि । नान्त-संख्या यथा पञ्च पुरुषाः पञ्च स्त्रियः पञ्च फलानि । एवमष्टौ पुरुषाः अष्टौ स्त्रियः अष्टौ फलानि । इत्यादि अन्येऽपि संख्यावाचका स्त्रिषु वर्त्तन्ते यथा त्रयः पुरुषाः तिस्रस्त्रियः त्रीणि कुलानि, एकः पुमान्, एका स्त्री, एकं कुलमित्यादि । सर्व्वादीनान्तु लिङ्गभेदेन स्वरूपभेदः यथा सर्व्वे पुरुषाः सर्व्वास्त्रियः सर्व्वाणि फलानि । एवं अयं पुमान् इयं स्त्री, इदं फलं, कः पुमान्, कास्त्री, किं फलं । यत्तदादीनामप्येवं । गुणवाचकानामपि तथा शीतलं जलं शीतलो वायुः शीतला नदी एवमन्यपदार्थवाचकाः सर्व्वएव विशेष्यलिङ्गवाचित्वात् त्रिषु वर्त्तन्ते, माथुरः, माथुरी, माथुरं । इत्यादीनामपि तथा । त्रिषु पाण्डौ च हरिणः त्रिषु विषाणं पशुशृङ्गदन्तयो स्वके नित्ये निजं त्रिषु, परिधानाञ्चले कच्छो जलप्रान्ते त्रिलिङ्गकः । इत्यभिधानतोऽप्यन्ये त्रिलिङ्गका ज्ञेयाः ।

अर्थभेदे लिङ्गभेदः।

अस्यार्थः—अर्थभेदे प्रायः शब्दानां लिङ्गभेदो दृश्यते।

Words having different genders in different meanings.

यथा—वसुः सूर्य्यो, वसुर्देवो वसुरग्निर्वसुर्महीः।

वसु रत्नं वसुद्रव्यं वसवोऽष्टौ ध्रुवादयः।

देशे नद विशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्॥

शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीड़ाम्बुयन्त्रके।

पाषाणोत्कर्षयोश्चापि शृङ्गं स्यात् कूर्चशीर्षकः।

भगं स्त्रीयोनि वीर्य्येच्छा ज्ञानवैराग्यकीर्त्तिषु।

माहात्म्यैश्वर्य्य यत्नेषु धर्मे मोक्षेऽथ ना रवौ।

शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढ़े शुद्धकर्म्मणि।

ज्यैष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु। इति मेदिनी।

रसेः कटुः कटूकार्य्ये त्रिषु मत्सरतीक्ष्णयोः।

वर्णो द्विजादि शुक्लादि यशोगुणकथासु च।

स्तुतौ ना, न स्त्रियां भेदरूपाक्षरविलेपन। मेदिनी।

ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु।

तीक्ष्णं सामुद्र लवणे विषलोहाजिमुष्कके।

क्लीवं यवाग्रजे पुंसि तिग्मात्मत्यागिनोस्त्रिषु। मेदिनी।

प्रवणं क्रमनिम्नोर्व्वरां प्रह्वे, नातु चतुष्पथे।

करणं करणे काये, साधनेन्द्रियकर्म्मसु।

कायस्थे व्रतवन्धे च नाश्यगीतप्रभेदयोः।

पुमान् शूद्राविशोः पुत्रे वानरादौ च कीर्त्त्यते। इत्यजयः।

श्वेतं रूप्येऽन्यवच्छुक्ले श्वेतो द्वीपाद्रिभेदयोरिति विश्वः।

रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु।

क्लीवन्तु कुङ्कुमे ताम्रे—इति मेदिनी।
घनं स्यात् कांस्यतालादि वाद्यमध्यमनृत्ययोः।
नाऽम्बुदाब्धयोघ दार्ढ्यषु विस्तारे लोहमुद्गरे।
त्रिषु सान्द्रे दृढ़े चेति मेदिनी।

समस्तपदानां लिङ्गनियमः।

Rules on using genders in compound words.

१। परं लिङ्गं द्वन्द्वादिषु। द्वन्द्वादिषु परं यत् परपदस्थं लिङ्गं तदेव स्यात्।

In द्वन्द्व, तत्पुरुष and कर्म्मधारय compounds the compound words will follow the gender of the last word.

पाणिनिमते कर्म्मधारयस्य तत्पुरुषान्तर्गतत्वं According to Panini कर्म्मधारय compound is included into तत्पुरुष. so he rejects it in his Sutra "परं लिङ्गं द्वन्द्वतत्पुरुषयो" रिति, कुक्कुटश्च मयूरीच कुक्कुटमयूर्य्यौ, एवं मयूरी च कुक्कुटश्च मयूरी-कुक्कुटौ इमौ, याया च पतिश्च दम्पती, तौ दम्पती, एवं वाङ्-मनसे, श्रद्धातपसी, शचीपुरन्दरौ तत्पुरुषे यथा धान्येनार्थः धान्यार्थः, सर्पाद्भीतिः सर्पभीतिः, राज्ञः कुलं राजकुलं, जनकस्य सुता जनकसुता, वापीषु अश्वः वाप्यश्वः कर्म्मधारये मानिनी जनः।

Exceptions.—(अपवादाः)

अर्थेन सह नित्यसमासो विशेष्यलिङ्गता चेति वार्त्तिकात् अर्थेन सह समस्तानां विशेष्यलिङ्गतैव In dative compound with अर्थ the compound words will follow the gender of the subject understood. यथा द्विजाय अयं द्विजार्थः सूपः, ब्राह्मणाय इयं

ब्राह्मणार्थो यवागूः, पुत्राय इदं पुत्रार्थं पयः। अन्य वत्प्राप्ता-पन्नालं प्रादिपूर्व्वे तत्पुरुषे इति सूत्रेण प्राप्त-आपन्न अलं-प्रादि पूर्व्वे तत्पुरुषे वाच्यलिङ्गं स्यात्—

In determinative ( तत्पुरुष ) compound having प्राप्त, आपन्न अलं or प्र &c. as first words, the compound words follow the gender of the subject understood. यथा उदकं प्राप्तः प्राप्तोदकः ग्रामः, जीविकां प्राप्तः प्राप्तजीविकः ब्राह्मणः, प्राप्तजीविका स्त्री, आपन्नसत्त्वा दुहिता, आपन्नसुखः पुत्रः, अलं कुमार्य्यै वरः अलं कुमारिः, प्रादिपूर्व्वो अतिक्रान्तो मालां अति मालः हारः, अतिक्रान्ता मालां अतिमाला हारयष्टिः, अवकुष्टं कोकिलया अवकोकिलं वनं निर्गतः कौशाम्बग्राः निष्कोषाम्बिः ब्राह्मणः, प्रतिगतः अक्षि प्रत्यक्षः पटः, एवमतिमर्त्यानि वीर्य्याणि, अतीन्द्रियं ज्ञानं अतिराजो दस्युरित्यादि। तत्पुरुषसमासे येषां क्लीवत्वं तानि क्लीवलिङ्गविवेके समुदाहृतानि।

२। तद्धितार्थो द्विगुर्बहुव्रीहिश्च।

तद्धितार्थो द्विगुर्बहुव्रीहिश्च वाच्यलिङ्गं भजते।

In Dwigu compounds denoting तद्धितार्थ and predicative (बहुव्रीहि) compounds the compound words follow the gender of the subject understood. पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः, पञ्चसु कपालेषु संस्कृतं पञ्चकपालं हविः। बहुव्रीहौ यथा वृद्धा भार्य्या यस्य स वृद्धभार्य्यः, एवं बहुधनः बहुधनमित्यादि

३। पूर्व्वमश्ववड़वयोः।

समाहारे अश्ववड़वयोः पूर्व्वपदस्य लिङ्गं स्यात्। When अश्व and वड़वा are connected by collective compound ( समाहार,

the compound word follows the gender of the first word. अश्वश्च वड़वा च अश्ववड़वौ, वड़वा च अश्वश्च वड़वाऽश्वे ।

४। एकशेषे शेषस्य ।

एकशेषे यः शिष्यते तस्यैव लिङ्गं When two or more words of same forms but in same or different genders are conected by collective compounds only one will remain and the compounds follow the gender of the remaining one. I · यथा देवश्च देवी च देवौ, ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ, शिवश्च शिवा च शिवौ, गार्गी च गार्ग्यश्च गार्ग्यौ, शुक्लश्च, शुक्ला च शुक्लं च शुक्लानि,

अजश्च अजाश्च अजा इमाः । स्वसा भ्रातेत्यादि सूत्रैर्भिन्न स्वरूपाणामप्येकशेषो भवति We find एकशेष of words of deffer. ent forms also. यथा स्वसा च भ्राता च भ्रातरौ, पुत्रश्च दुहि-ताच पुत्रौ, माता च पिता च पितरौ, जगतः पितरौ वन्दे पार्व्वतीपरमेश्वरौ, श्वशुरश्च श्वश्रुश्च श्वशुरौ, स च ब्राह्मणी च तौ, एष च, नदी च ग्रामश्च एते, स च त्वञ्च अहञ्च वयम् ।

## विशेषणलिङ्गविवेकः ।

विशेष्यस्य हि यल्लिङ्गं विभक्तिवचनानि चेतिवचनात् विशे-ष्यस्य लिङ्गं प्रायो विशेषणमुपसंक्रामति ।

Adjectives generally agree with their substantives in gender.

विशेषणानि च प्रथमतो द्विविधानि सिद्धानि साध्यानि । साध्यानि पुनर्द्विविधानि प्रकृतिप्रत्ययनिष्पादितानि, समास-निष्पादितानि तत्र सिद्धानि यथा—पिङ्गं कपिलं, नवं, प्रकृति-

प्रत्ययनिष्पादितानि साध्यानि यथा पक्कं मग्नः मागधः, सर्व्वाङ्गीणं; समासनिष्पादितानि साधयानि यथा महाधनः, पुरुषोत्तमः, ऐश्वर्य्यमत्तः। क्वंचित् समासनिष्पादितपदेभ्यस्तद्धितादिप्रत्यययोगात् साध्यविशेषणानि सम्पद्यन्ते, यथा,—साप्तपौरुषं। सार्व्वलौकिकं, विश्वमातिशयभाक्। इत्यादि

Adjectives generally fall into three classes, primitive adjectives, derivative adjectives. and compound adjectives. Premitive adjectives are those which can not be clearly traced to roots or other primitive words, such as पिङ्ग, कपिल, नव, &c. Derivative adjectives are derived from roots or nouns, such as पक्क, मग्न, मागध, सर्व्वाङ्गीण &c. Compound adjectives are formed with two or more primitive or derivative words, connected together by a compound. such as महाधन, प्राप्तजीविक, पुरुषोत्तम ऐश्वर्य्यमत्त &c. Adjectives are also derived from compound words with a तद्धित affix or with क्विप् such as. साप्तपौरुष, सार्व्वलौकिक, विश्वमातिशयभाक्

शोभना धीर्यस्य स सुधीः एवं सुभ्रूः इत्यादीनि समासनिष्पादितान्येव Such words as सुधी onu having good intellect सुभ्रू having fine brows are compounds and not derivative adjectives.

पुंक्लीवविशेषणानां प्रातिपदिकस्वरूपाणि प्राय एकरूपाणि भवन्ति। पुंसि दीर्घस्वरान्तानान्तु क्लीवे ह्रस्वस्वरान्तता भवति।

The neuter base of all adjectives is the same as the masculine base. Except when the adjective ends in a long vowel in the masculine, it is shortened in the neuter.

विमुच्य वासांसि गुरूणि साम्प्रतं (गुरु इति प्रातिपदिकस्य पुंक्लीवयोः साम्यम्) सादृश्यं दधति गभीरमेघघोषैः (दधत् इत्यस्य पुंक्लीवयोः साम्यम्) कौसुम्भं पृथुकुचसङ्गि रागः। (सङ्गिन् इत्यस्य पुंक्लीवयोः साम्यम्), प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम् (गरीयस् इत्यस्य), त्रिपुरान्तकृद् धनुः (कृत् इत्यस्य), अञ्जनद्युति एनाजिनं (द्युति इतरस्य च पुंक्लीवयोः साम्यम्) कुमुदवनमपश्रि (पुंसि अपश्रीरिति रूपं भवति)।

दुर्निवाररणकण्डु वक्षः (पुंसि रणकण्डूरिति रूपं); ए, ऐ इत्येतयोर्ह्रस्वत्वे इकार एव, ओ, औ इतरयोर्ह्रस्वत्वे उकार एव भवति। ततश्च आतिष्ठद्गु जपन् सन्ध्यां, प्रद्यूनि पुण्यानि, सुरीणि कुलानि, सुनूनि जलानि इति क्रमेण गो, द्यो, रै, नौशब्दानां नपुंसकरूपाणि।

(१) अदन्तेभ्यः सिद्धविशेषणेभ्यः स्त्रियामाप् भवति.

Primitive adjectives ending in अ form their feminine in आ. स्व इत्यस्य स्वा, शुभ इतरस्य शुभा, पिङ्ग इतरस्य पिङ्गा, परम इतरस्य परमा, अभिनव इतरस्य अभिनवा, पाटल इतरस्य पाटला समग्र इतरस्य समग्रा, मलिन इतरस्य मलिना, मलीमस इतरस्य मलीमसा, कृश इतरस्य कृशा, पाप इतरस्य पापा इति रूपं भवति। एवमन्येषामपि। यथा स्वामुपस्कारकेलिं, विपाकपिङ्गा व्रततीततिः, द्युतिं समग्रां, पाटलायां गवि, पदपंक्तिर्दृश्यतेऽभिनवा। मलीमसामाददते न पद्धतिम्।

Exceptions. अपवादाः श्वेत, हरित, रोहित, लोहित एतेभ्यः आप्, ङी च भवति, ङ्यान्तु तकारस्य नकार, A few ending in त such as श्वेत, हरित &c. optionally form their

feminine in ई, यथा श्वेनी, श्वेता, हरिणी, हरिता, भरिणी, भरिता, रोहिणी, रोहिता, लोहिनी, लोहिता, एनी एता हंसश्वेनी, आतपाय लोहिनी विद्युत्, हरिणीषु ओषधिषु। पद्मनाभमते असितस्य असिता असिक्नी, पलितस्य पलिता पलिक्नीति रूपद्वयं भवति Padmanabha adds, असिक्नी and पलिक्नी as the optional feminine form of असित and पलित respectively. शोणादेर्वा A few words such as शोण &c form their feminine in आ or ई optionally, शोणी शोणा, चण्डी, चण्डा, उपाध्यायी, उपाध्याया, "चण्डी चण्डं हन्तुमभ्युद्यता मां" शोणादि यथा शोण, चण्ड, उपाध्याय, अराल, विशाल, विकट, विसङ्कट, कृपण, पुराण, कल्याण, साधारण, उदार श्रीविशालां विशालां, रघोरुदारामपिगां निशम्य, कल्याणी, साधारणी, पुराणी (are only found) त्येव दृश्यन्ते। कल्याणीत्यधिकफलां क्रियां क्रियासुः, साधारणी गिरमुषर्बुधनैषधाभ्याम्। तदादीनान्तु सर्व्वनाम्नां टेरत्वेऽदन्तत्वादाप् स्यात् The pronouns तत्, त्यत्, एतत्, यत्, किम् and द्वि though do not originally end in अ but being changed in to स, स्य, एष, य, क and द्व respectively take आ in their feminine, as तत्, सा, त्यत्, स्या, एतत्, एषा, यत् या, किम् का, द्वि द्वा।

२। गौरादेर्ङी।

गौरादेः स्त्रियां ङी स्यात्।

Adjectives गौर &c. form their feminine in ई, गौरी, किशोरी, तरुणी, पिशङ्गी। कल्माष सारङ्ग पीवरादीनामपि गौरादीषु ग्रहणं under this rule come कल्माष, सारङ्ग and पीवर &c. "सवत्सां

पीवरीं दृष्ट्वा" इति हेमाद्रिः वामनेन पुष्कल, विकल, निष्फल, शवल, लवणानां गौरादिषु गणना कृता, परं तच विशेषणानां-मादन्तता दृश्यते Vamana adds पुष्कल, विकल, निष्फल, शवल and लवण, but as adjectives they must form their feminine in आ, यथा चेष्टां कृत्वा च पुष्कलां, निष्फला क्रिया।

Special rules विशेषनियमाः—कवरी केशपाशे अन्यत्र कवरा, कवरी braid of hair कवरा (varigated) व्याकीर्णमाल्यकवरां कवरी तरुण्याः। काली (black) कृष्णायां, काला (name of some plants लताविशेषे, छायां ततानेशवलानि कालीम्। काली कालिका चोर कीटयो र्मातृभेदेनयोर्नव्ये मेघौघ परिवादयोः इति हेमचन्द्रः। नीली (a female animal and ओषधि plant) प्राण्यौषधयोर्नीली वड़वा, नीली गौः, नीली ओषधिः नीला अन्यत्र "तमालतालीवनराजिनीला तमालनीला नितरां सह्यापगा प्राणिन्यपि नीला दृश्यते, नीला is also found in the sense of a female animal यथा कुवलयदलनीला कोकिला वालचूते। कृष्णा स्वर्गप्रदा ज्ञेया, नीला धर्मविवर्द्धिनी इति हेमाद्रिः नीली अनाच्छादनश्चेत् नीली means any thing which does not cover the body &c.

नीलाऽन्या नील्या रक्ता शाटीत्यर्थः When means covering it is नीला as नीला शाटीः संज्ञायां वा नीली नीला वा। when it means a particular thing it takes both forms नीली and नीला, कामुका means one having a desire, in other sense it is कामुकी (मैथुनेच्छायाम्), पाणिनि मते जानपदादीनामुभयरूपता, According to Panini the words जानपद &c. take both forms

यथा जानपदी वृत्तिश्चेत्, अन्यातु जानपदा, कुण्डी अमत्रञ्चेत्, कुण्डा अन्या, यत्तु अस्मृते जारजः कुण्ड इति मनुष्यजातिवचनस्ततोजातिलक्षणो ङीप् भवत्येव, अमत्रे हि स्त्रीविषयत्वाभावद्द प्राप्तो ङीप् विधीयते नतु नियम्यते। गोणी आवपनञ्चेत् गोणान्या स्थली अकृत्रिमा चेत्, स्थलाऽन्या, भाजी पक्वायां, भाजाऽनत्रा, नागी स्थूलाचेत् नागाऽन्या। but the forms स्थूला, जानपदा, गोणा, कुण्डा have been never met. एवं कुशी अयोविकारश्चेत् कुशा अन्या so कुशी in the sense of iron pot and कुशा in other sense. शोणात् प्राचां इति पाणिनीय सूत्रं शोणी शोणा, The rule शोणादेर्वा is not found in Panini and even of शोण he adds प्राचां in प्राचामाचार्य्याणां मतेन according to older writers. अमरमते धवल श्यामल शवलानां गोविशेषणत्वे यथाक्रमं धवली, श्यामली शवलीति रूपं भवति Amara gives धवली श्यामली शवली as names of cows. परं हेमाद्रौ शवला, श्यामला इत्येव प्रयोगो दृश्यते, But read हेमाद्रि शवलां धेनुं दत्वा पयस्विनीम्। पिशङ्गस्य तु the feminine form of पिशङ्ग are पिशङ्ग पिशङ्गी, कल्माष सारङ्गयोस्तु while कल्माष and सारङ्ग have only one form कल्माषी, सारङ्गीत्येव। कृष्ण कपिलादीनान्तु कृष्णा कपिला इत्येव but the feminine forms of कृष्ण and कपिल &c. are कृष्णा कपिला &c. केरलादेः संज्ञायां इति सुपद्मसूत्रम् According to Supadma the feminine forms of केरल &c. in some particular sense are केरली नाम ज्योतिषं मामकी देवता, समानीछन्दः, सुमङ्गली कापि, पृथ्वी भूमीः पाणिनीय सूत्रन्तु केवल मामक भागधेय पापाऽपर समानार्य्यकृत

सुमङ्गल भेषजाच्चेति Panini reads केवल instead of केरल and gives the following list केवल, मामक, भागधेय, पाप, अपर, समान, आर्य्यकृत, सुमङ्गल, and भेषज, अनयत्र केवला इत्यादि सिद्धान्तकौमुदी when they do not express a particular thing, take आ in their feminine केवला, मामिका &c. पाण्डुर सुन्दरयोर्मनुष्यजातौ। मनुष्यजातौ ङी स्यात् पाण्डुरी सुन्दरी वा मानवी अन्यत्र पाण्डुरा भूमिः, सुन्दरा प्रतिमा इति पद्मनाभः According to Padmanabha the feminine forms of पाण्डुर and सुन्दर are पाण्डुरी and सुन्दरी respectively when a female of mankind is meant, but in other sense they take आ यथा "पादप्रहार इति सुन्दरि नाऽत्र दूये" "सुन्दरी राजपुत्री" in other sense पाण्डुरा भूमिः, सुन्दरा प्रतिमा। मनुष्य जाता-वितुपलक्षणं अन्यात्रापि दृश्यते यथा वर्णविशेषैः सुरसुन्दरीणा-मितरादि we find सुन्दरी denoting a female generally यथा वर्णविशेषैः सुरसुन्दरीणामितरभिज्ञान शकुन्तलम्।

३। इवर्णान्तानां न ङयापौ।

इवर्णान्तानां विशेषणानां स्त्रियां ङयापौ न भवतः। Primitive adjectives ending in इ remains unchanged. यथा शुचीरपः शैव-लिनोर्दधानः। इति शिशुपाल वधं, शुचि भूषयतिश्रुतं वपुः इति किरातार्ज्जुनीयम् अत्र क्रमेण स्त्रीक्लीवयोरुदाहरणमसखि शब्दात्तु ङी भवतेव The feminine form of सखि (a friend is सखी सख्यः शपामि।

४। उतो गुणवचनादसंयोगोपधात्।

उदन्तात् गुणवचनात् ङी वा स्यात्।

Pimitive adjectives ending in उः if not preceded by a compound consonant, may optionally take ई in the feminine. यथा गुरुः गुर्व्वी वा गुरुर्धरित्री क्रियते तरां त्वया इति "गुर्व्वी रजस्त्वं द्रुषदः समन्तात्" इति च शिशुपाल वधं, एवं मृदुः मृद्वी "सेयं मृदुः कौसुमचाप यष्टिः" इति "वाचं तदीयां परिपीय मृद्वी" इति च नैषधीयचरितम्। एवं तनुः, तन्वीतरादि "तन्वी तवेयं तनुः" असंयोगोपधात् किं If preceded by a compound consonant remains unchanged पाण्डुः कद्रुः ; खरु शब्दस्यापि निषेधः खरु is an exception and remains unchanged. खरुः, भीरुः इत्यादिषु ऊङ् स्यात् नङी।

Exception अपवादाः शिशुशब्दस्तु स्वरूपेण तिष्ठति We do not find any change in शिशु यथा "शिशु र्वा शिष्या वा" शिशुर्दधती मुख" मितिचोत्तरचरितम्। अशिशु (न विद्यते शिशुर्यस्या सा) शब्दस्य तु 'अशिश्वी' इति रूपं भवति the feminine form of अशिशु (without child) is अशिश्वी, अशिश्वी शिशुना-विनेत्यमरः See सख्यशिश्वीति भाषायाम् (४।१।६२) पाणिनीय सूत्रम्। ततश्च नञतत् समासे अशिशुरेवेति and consequently when अशिशु means not a young, it remains unchanged. एवं शत्रु शब्दस्यापि न ङापौ So शत्रु applied to a female remains unchahgeable यथा भार्य्या रूपवती शत्रुः।

६। हलन्तेभ्योङी।

हलन्तेभ्यः सिद्धविशेषणेभ्यः स्त्रियां ङी स्यात्। The primitive adjectives ending in a consonant form their feminine with ई यथा महत्, महती, वृहत्, वृहती इत्यादि "प्रभामहत्या शिख-

येव दीप:" कुमारसम्भवं "महती व्यथाऽजायत" ऋजुपाठ: । एवं तृषा महत्या परिशुष्कतालव: । "उपेयुषीणां बृहतीरधित्यका:" किरातार्ज्जुनीयम् अञ्चतेस्तु (ङी) स्यादेवेति वार्त्तिकम् Adjectives from अञ्च applied to the quarters दिक् generally have their feminine with ई यथा प्राची, अवाची, उदीची and प्रतीची &c. "दिश मर्कमिवावाचीं मूर्च्छागतमपाहरत्"। शिशुपालवधम् । उदीची दक्षिणां प्राचीं प्रतीचीं विदिशस्तथा" इति महाभारतम् दिगर्थ भिन्नेभ्योऽपि ङीट्टश्यते We find the feminine with ई even when such adjectives are not applied to the quarters (दिक्) यथा पराची, तिरश्ची, विष्वद्रीची, अदद्रीची, असुद्रीची &c. युवन्-शब्दस्य तु युवति: The feminine form of युवन् is युवति युवती तु यौते: शत्रन्तात् ङ्यां वोध्यम् युवती is the feminine of verbal adjective (यु) युवत् इति सिद्धविशेषणानि । साध्यान्यपि विशेषणानि कानि चित् कृत्प्रत्ययनिष्पन्नानि, कानिचित् तद्धितप्रत्ययनिष्पन्नानि कानिचित् समास निष्पादितानीति त्रिविधानि । Derivative adjectives are generally of three kinds, some derived from verbal roots with a कृत् affix, others from nouns with a तद्धित affix, thirdly compound words meaning things and persons understood.

७ । कृत्यान्तेभ्य आप् ।

कृत्यप्रत्ययान्तेभ्यो विशेषणशब्देभ्य: स्त्रियामाप् स्यात् ।

Verbal adjectives in कृत्य, तव्य, अनीय, यत्, ण्यत्, क्यप् । form their feminine with आ ।

८ । आनान्तेभ्यश्च ।

शानकानयोरानस्तदान्तेभ्यश्च आप् स्यात् । verbal adjectives

आन, form their feminine with आ, यथा कुर्व्वाणा, बिभ्राणा आसीना, करिष्यमाणा, पेचाना, चिक्याना &c. "विभ्राणां ज्वलितमणीनि सैकतानि" किरा, "आसीना तटभुवि सस्मितेन भर्त्रा" शिशु, "वत्स प्रवासदुर्म्मनायमानां कौशलेश्वरसुतां सान्त्वयामः। "तां वै शक्तिं लेलिहानां प्रदीप्तां पार्श्वैर्युक्तामन्तकस्येव जिह्वाम्" महाभारतं, अत्र लेलिहानामिति आर्षं लेलिहतीमिति साधु। "कल्पिष्यमाणा महते फलाय वसुन्धरा काल इवोप्त बीजा" अभिज्ञानशकुन्तलम्।

तत्र—तव्यान्तो यथा "गन्तव्या ते वसतिरलका" अनीयान्तो यथा "अशेषजनपूजनीयेयं जातिः" यदन्तो यथा "इमे अपि प्रदेये "यच्चाभिलषेत् सामुष्मै देया" ण्यदन्तो यथा "आमावास्या" "अमावास्या" पाणिसर्ग्या रज्जुः, भार्य्या वधूः, क्यबन्तो यथा ग्रामगत्या सेना एव मन्यत।

Exceptions (अपवादाः)

आचार्य्यो यदा व्याख्यातृवाचकस्तदाऽस्य स्त्रियां आचार्य्या इति, आचार्य्यस्य पत्नी इत्यर्थे तु आचार्य्याणी, आचार्य्या the feminine form of आचार्य्य denotes a female preceptor. and आचार्य्याणी the wife of a preceptor.

९। क्तान्तेभ्यश्च।

क्तप्रत्ययान्तेभ्यश्च स्त्रियां आप् स्यात्।

Verbal adjectives (past participle, in त changeable to न, व,म &c.) form their feminine with आ. यथा गता, जाता, अतीता, रुदिता, शुष्का, मग्ना, क्षीणा, हृष्टा, रुष्टा, क्षामा,पक्वा, इत्यादि।

"क्षीणा च हृष्टा च बभाण भैमी" नैष, "मृदूनि, दूना परिदेवितानि सा" नैष "चक्रन्द विग्ना कुररीव भूयः" रघु "मध्यक्षामा चकितहरिणी प्रेक्षणा" मेघ, "क्षामक्षामाऽपि देवतानुभावात्" "एताश्चतुर्भ्यो रघुनन्दनेभ्यो दत्ताः प्रतीष्टाश्च समं मयैव" वीरचरितम्। पुष्करिकया सन्निधापितां वेणुयष्टि" परिखाभ्यां स्थापितया च दशकुमारचरितम्। एवं आविष्टेव, ग्रहग्रस्तेव कादम्बरी।

Exceptions अपवादाः।

क्रीतात् करणपूर्व्वात् when the word क्रीत (क्री + त) comes after an instrumental case its feminine form is with ई. यथा वस्त्रक्रीती, &c. क्वचिन्न भवति धनक्रीता.। white the feminine form of धनक्रीत is धनक्रीता क्तादल्पाख्यायाम्) करणादेः क्तान्तादल्पाख्ययां स्त्रियां ङीप् स्यात् when participles ending in त denote scanty and stand as the last word in a compound form the feminine with ई. यथा अभ्रलिप्ती द्यौः, the sky is partly covered whith clouds. अल्पाख्यायां किम्? When such participles denote abundance form their feminine with आ. यथा चन्दनलिप्ताङ्गना. बहुब्रीहौ स्वाङ्गपूर्व्वात् क्तान्तात् ङीः स्यादेव In Bahubrihi compounds with the first member a limb (स्वाङ्ग) and the second member a participle in त are said to take ई in the feminine. यथा ऊरुभिन्नी, ओष्ठविच्छती, अस्वाङ्गपूर्व्वात्तु विकल्पेन ङीः। If the first member is not a limb they are said to take ई optionally. यथा सुरापीती,

सुरापीता. इक्षुभक्षिती, इक्षुभक्षिता, पलाण्डुभक्षिती, पलाण्डुभक्षिता, वहुकृतादेस्तु आप् एव The feminine forms of वहुकृता &c. are with आ only. यथा वहुकृता, दन्तजाता, वस्त्रच्छन्ना, वसनप्राप्ता पाणिगृहीती भार्य्यायां पाणिग्रहीताऽन्या in the sense of wife, पाणिगृहीत takes ई in feminine, पत्नी पाणिगृहीतीचेत्यमरः in other sense पाणिगृहीता ।

१० । [अकाजाद्यन्तेभ्यश्च आप् ।

अक, अच, ण, क, ड, अनादिप्रत्ययान्तेभ्यो विशेषणेभ्यो आप् स्यात् । verbal adjectives in अक, अच, ण, क, ड, अन &c. form their feminine with आ. अक (१) इत्यस्य तु इकादेशो भवति स्त्रियाम् but अक in feminine is changed to इक । यथा कारिका, नियामिका, प्रेक्षिका, ते सेने प्रेक्षिके तदा, भेदिका—वाणो न वर्द्धयतु तावदभेदिकेयं, प्रतिपादिका—भूम्यादिप्रतिग्रहप्रतिपादिकाः श्रुतयः, लासिका एषा नानकमोषि-काम-कर्शिका, मत्स्याशिका लासिका इत्यादयः, अच यथा चला "शरदभ्रचला" मनोहरा, वाक्यहरा दूती, पूजार्हा ब्राह्मणी, शिलाशयान्तामनि-

---

(१) अक इत्यनेन थकन् इत्यादीनां परिग्रहः यथा गाथका. णक यथा गायिका, आशिष्यर्थे णक (अक) प्रत्ययस्य तु स्थाने इक् न भवति If अक has a benidictive sense, it forms feminine in आ only. जीवतात् जीवका, नन्दतात् नन्दका, भवतात् भवका ।

केत वासिनीम्, पचा, श्वपचा इत्यादयः (२) क यथा प्रिया, कृशा, अभिज्ञा, अनभिज्ञा "एवं विधानां वृत्तानामनभिज्ञास्मि, प्रज्ञा, सोमपा, मधुपा, चीरपा, प्रदा, प्राणप्रदा, "प्राणप्रदेऽद्य परिपूरय मेभिलाषम्" मध्यस्था—मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति। शोकापनुदा प्रिया, कामदुघा गौः, प्रोता कामदुघा हि सा &c. श यथा पश्यतीति पश्यः, पश्या बहुचसा "भवतीं बहुचसां" एवं मांसभचा, कल्याणाचारा, मांसशीला, सुखप्रतीचा। खश यथा अरुन्तुदा "तीक्ष्णा नारुन्तुदा बुद्धिः" नाड़िन्धमा "पश्येता रुचयः पतङ्ग दृशदामाग्नेयनाड़िन्धमाः" प्रियम्बदा "प्रियम्बदा प्रत्युदीयाय पार्व्वती" असूर्य्यम्पश्या राजदाराः असूर्य्यम्पश्यया मूर्त्या, सर्व्वसहा वसुमती, सर्व्वङ्कषा सर्व्वङ्कषा भगवती भवितव्यतैव, कुलङ्कषा नदी, करीषङ्कषा वात्या, नाड़िन्धमा, पश्यैता रुचय आग्नेयनाड़िन्धमाः। भयङ्करा, भयङ्करा भृशमपि दर्शनीयतां, एवं पतिम्बरा कृतविवाहवेषा, विश्वम्भरा भगवती भवतीमसूत &c. ड यथा अनुजा, लक्ष्मणस्तदनुजामथोर्म्मिलां जीवितापहा—स्रगियं यदि जीवितापहा, जनकात्मजा, कथमियं तस्यात्मजा ?। एवं सहजामप्यपहाय धीरताम् दुर्गा, पारगा, निम्नगा,सर्व्वगा, सर्व्वत्रगा। अन यथा जवना, प्रजवना जवना नदी, एवं भीषणा, कोपना, शोभना, कल्पना,

---

(२) we find also—

"माता ऋक्थ हरी ज्ञेया भ्राता च तदनुज्ञया।"

"एवमग्निमान्द्यहरी ह्यद्या वह्नविट् क्रमिशूक्रहृत्।"

इत्यादि प्रयोगा अपि दृश्यन्ते।

कुलवर्द्धना, रोषणा इत्यादि उक,ऊक, यथा अभिलाषुका, पातुका हरिं परित्यज्य नलाभिलाषुका। एषामतस्त्वं सव वावदूका। पादुका, "व्रज भरत गृहीत्वा पादुके त्वं मदीये" खल् यथा सुलभा विद्या, "असुरचा हि बहुच्छला: स्त्रियः" ख्य यथा पण्डितम्मन्या, साधुम्मन्या &c. इत्र यथा पवित्रा "रसामृतस्नान-पवित्रया गिरा" &c. मरक् स्मरा, घस्मरा "घस्मरामद्रिका" इति घुरप्, यथा भासुरा, भङ्गुरा, &c. कुर यथा, भिदुरा, छिदुरा "मृणालतन्तुच्छिदुरा सती स्थिति: त्रिमक यथा कृत्रिमा, "संस्कृत्रिमाभिर्व्यवहारवत्सु" र यथा—कम्रा, नम्रा "कम्राभिराहत: स्त्रीभिराशंसु: क्षेममात्मन: &c. केलिम यथा भिदेलिमा: सरला भेतव्या: ; वर यथा स्थावरा, भास्वरा, ईश्वरा "विन्यस्तमङ्गल महौषधिरीश्वराया:॥ इति किरातार्जुनीयम् "वचसामधीश्वरा" नैषधचरितम्। षक् सदृचा, खदृचा, &c.

Exceptions (अपवादा:)

उरगी, भुजगीत्यादिषु जातौ ङी, when उरग, भुजग &c. signify a class जाति their feminine forms are with ई, उरगी भुजगी, &c. एवं मधुपी भ्रमरीत्यादावपि जातौ ङी: कामुकी मैथुनेच्छायां when कामुक means covetous a forms its feminine with ई, but when it means desirous its feminine form is with आ. तथाहि वृषस्यन्ती कामुकी स्यादिच्छायुक्ता तु कामुका इति हेमचन्द्र:। ईश्वर शब्दस्य स्त्रियामिश्वरीत्यपि दृश्यते we find ईश्वरी as the feminine form of ईश्वर. यथा "अये जीवितेश्वरी मे प्राप्ता" "सैव सर्व्वेश्वरेश्वरी" "ईश्वरीं सर्व्वभूतानां" नारायण मते ईश्वन् शब्दस्यैव स्त्रियामीश्वरीति रूपं भवति नत्वीश्वरशब्दस्य

According to Narayana ईश्वरी is from ईश्वन् (ईश्+वनिप्) and not from ईश्वर (ईश्+वरप्). केश्चिद्भयंकर शब्दस्य स्त्रियां भयंकरीति रूपं पठ्यते some read भयंकरी as the feminine of भयङ्कर, यथा भुवनभयङ्करी: कथमधत्त रूपोऽपि मुनि: तत्तु ट प्रत्ययान्तस्यैव रूपं न तु ख प्रत्ययान्तस्येति समर्थनीयम् It must be understood that when भयंकर is derived with ट its feminine form is भयङ्करी, एवमच् प्रत्ययान्तस्य किङ्करशब्दस्य स्त्रियां किंकरा इति रूपं, ट प्रत्ययान्तस्य तु किंकरीति so when किंकर is derived with अच् the feminine form is किंकरा and when with ट किंकरी, सिद्धान्तकौमुदीमते किंपूर्व्वात् करोतेरच् एव भवति न तु ट, ततश्च पुंयोगे किंकरस्य भार्य्या इत्यर्थे केवलं किंकरी भवति नान्यत्र. According to Sidhanta kaumudy the feminine form of किंकर is किंकरा, किंकरी is only in the sense of wife of a किंकर. सुरा शीध्वो: पिवते रित्यनेन टक् प्रत्ययान्तयो: सुराप शीधुप शब्दयो: स्त्रियां सुरापी, शीधुपीति रूपं भवति। Aa सुराप and शीधुप are derived with टक् and uot with क so their feminine forms are सुरापी and शीधुपी respectively. सुराम्पाति रक्षतीति क्विपि प्रत्यये तु सुरापा इति रूपं भवति।

स्तनन्धय इत्यस्य तु घेटष्टित्वात् स्तनन्धयीति रूपं भवतीति सिद्धान्तकौमुदी टित्त्वस्यावयवेऽचरितार्थत्वात् प्रत्ययान्त एवावकाश इति भाव:, तत्रापि खश्प्रतययान्तादेव घेटो ङीप् नान्यत्रेति हरदत्तादय: According to सिद्धान्तकौमुदी the feminine form of स्तनन्धय is स्तनन्धयी उक्तयुक्त्या नासिकन्धयी, नाड़िन्धयी, मुष्टिन्धयीत्यपि भवति for same reasons the feminine forms

of नासिकन्धय, नाड़िन्धय, मुष्टिन्धय are नासिकन्धयी, नाड़िन्धयी, मुष्टिन्धयी respectively. महाभारते एकरात्रशयीति प्रयोगो दृश्यते. We find in Mahabharata the feminine form of एकरात्रशय as एकरात्रशयी "एकरात्रशयी गेहे" but that may be considered. आर्ष.

११। ऊङुतः ॥

उकारान्तादयोपधात् मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात्; अनेन सूत्रेण उदन्तेभ्यः कृदन्तविशेषणेभ्यश्च ऊङ् भवति।

Words ending in उ (applied to mankind) except (यु), lengthen their final vowel. (panini 4.1.66) According to this rule the final vowel of a verbal adjective ending in उ is also lengthened. यथा, (भीरूः भी+क्रु) बहुलाधिकारात् भीरुरित्यपि as option is continued we find भीरु also. मनुष्य जातेरिति किम्? When not applied to mankind the final vowel is not lengthened यथा किमभीरुररार्य्यसे इति भट्टी. एवं वन्धूः यथा "वन्धूं कुन्तीमुपादाय याश्चान्यास्तत्र योषितः" इति महाभारतम्, किन्तु वन्धुस्त्रीति सारसिकः प्रयोगः but the usual form of a वन्धु woman is वन्धुस्त्री. "वन्धुस्त्रियो याः पतिपुत्रवतरः" कुमारसम्भवम्. क्वचित् वन्धुरिति ह्रस्वान्तोऽपि दृश्यते we find also वन्धु with short vowel. यथा "ज्योत्स्नेव कृत्स्ना सुरसिन्धुवन्धुः" इति नैषधचरितम्.

१२। टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः — 

१२। टिदणाद्यन्तेभ्यो ङीः।

टकन्, टक्, आकट, ट, टन प्रभृतिभ्यः टकारेत् कृदन्तेभ्यः

अणाद्यन्तेभ्यश्च ङीः स्यात्. पाणिनिमते षकारेत् प्रत्ययान्तेभ्योऽपि ङीः स्यात्.

Verbal adjectives in टकन्, टक्, आकट, ट, टन &c having their ट rejected and in अण् &c. form their feminine with ई. According to Panini verbal adjectives in affixes having ष rejected form their feminine with ई also.

टकन् (ष्वुन) नर्त्तकी, "सिततुरगो न चचाल नर्त्तकीनां," "सकौतुकं नृत्यति कीर्त्तिनर्त्तकी" नैषधचरितम् एवं खनकी, रजकी रञ्जेस्तु शिल्पिसंज्ञयोरित्यौणादिक क्वुन् प्रत्यये रजक इति स्त्रियां रजिका इति but when रजक is derived with औणादिक क्वुन् its feminine form is रजिका, (a woman of that class) पुंयोगे तु रजकी but when means wife of a रजक the feminine form is रजकी. टन (ल्युट्) गायनी, आकट् (षाकन्) जल्पाकी "जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया," वराकी "इयं वराकी" "सीतां वराकीं प्रति," एवं भिक्षाकी कुट्टाकी, लुण्टाकी ; टक् वेदगी, सामगी, जायाघ्नी रेखा, पित्तघ्नी तिक्ता, नगरघ्नी व्याघ्री, कपाटघ्नी शक्तिः एवं "जरामृत्युभयघ्नीभिः क्षुद्भयघ्नीरिव च" इष्टयोराहतिर्द्विघ्नी कोटिर्व्वर्गान्तरं भुज" इति लीलावती. शत्रुघ्नस्य तु स्त्रियां शत्रुघ्ना इति पद्मनाभः According to Padmanabha the feminine form of शत्रुघ्न is शत्रुघ्ना. एवं कृतघ्नस्यापि स्त्रियां कृतघ्ना so the feminine form of कृतघ्न is कृतघ्ना वस्तुतः शत्रुघ्न. कृतघ्न इत्यादि मूल विभुजादित्वात् (क प्रत्ययेन) सिद्धम् In fact शत्रुघ्न, कृतघ्न &c. are derived with क, not with टक् ; ट यथा कुरुचरी, खेचरी, नक्तञ्चरी, अग्रसरी, आदायचरी, सह-

चरी (१) "प्रेच्यस्थितां सहचरीं" "व्योमयानासहचरो कैकेयी याचतेऽस्य तत्" एवं नासीरचरीषु अग्रेसरीषु दासीषु" खनट् (ख्युल) आढ्यङ्करणो वणिज्या, टन (ल्युट) करणी, जननी, बोधनी, पालनी "एवमुक्त्वा ददावस्मै विशल्यकरणीं शुभाम्" "कुरूणामधिपस्य पालनीं प्रजासु वृत्तिम्," अण् यथा प्रतिहारी पुष्पलावी, शालिगोपी, शुद्धान्तरची, कुम्भकारी &c. "पुष्पलावी।—मुखानां" "आकुमार कथोद्घातं शालिगोप्योजगुर्यशः" "शुद्धान्तरच्या जगदे कुमारी" "उद्यानपाली, हंसपाली" त्यादि पदेन क्वरपादयो गृह्यन्ते क्वरप् यथा इत्वरी, गत्वरी, "अभिद्रोहेण भूतानामर्ज्जयन् गत्वरीः श्रियः" टक् यथा सदृशी, ईदृशी कीदृशी &c.

१२। वनोरश्चान्तोऽयुधः।

वनन्तात् ङी स्यात्, नश्च रेफादेशः।

The feminine forms of verbal derivatives in वन् are with ई, and न is changed into र, धीवरी, पीवरी, दृश्वरी, सहकृत्वरी यमास्यदृश्वरी तस्य ताड़का वेत्ति विक्रमम्" "रणाङ्गने सहकृत्वरी वहु" अयुध इति किम् such derivatives from the root युध do not come under this rule राजयुध्वा, सहयुध्वा, वन्निति ङ्वनिप्, क्वनिप्, वनिपां सामान्यग्रहणमिति सिद्धान्तकौमुदी। According

---

(१) सुपद्ममते आदाय सहाचेति वार्त्तिकात् सहचर इतयत्र ट प्रतयय एवं पाणिनिमते अच् प्रतययः तथाहि पचादिषु चरट् इति पाठात् सहचरीतयत्र ङीरिति सिद्धान्त कौमुदी।

to सिद्धान्तकौमुदी वन् includes ङ्वनिप्, क्वनिप् and वनिप्। तेन सुत्वानमतिक्रान्ता अतिसुत्वरी शर्व्वरी इत्यादि।

It recites the following वार्त्तिक—वनो न हश इति वक्तव्यम्, हशन्ताद्धातोर्विहितो योवन्, तदन्तात्, तदन्तान्ताच्च प्रातिपदिकात् ङीप्, रश्च नेत्यर्थः, ततश्च ओण् अपनयने इत्यस्मात् वनिप् प्रत्यये कृते स्त्रियां "अवावा" इत्येव रूपं भवति अवावा व्राह्मणी According to Siddhant-kaumudi this rule does not apply to derivatives in वन from roots ending in consonants. वा वहुव्रीहौ In वहुव्रीहि compound the feminine form of derivatives in वन is optionally formed with री, यथा वहुधीवरी, वहुधीवा वा एवं "इष्ट्वा काश्चित् प्रहरणमयीं वीरयज्वानमिष्टिम्" इत्यनर्घ।—राघवम्।

१३। ऋन्नेभ्यो ङीः।

ऋकारान्तेभ्य इनन्तेभ्यश्च कृदन्तेभ्यः स्त्रियां ङीः स्यात्।

Verbal adjectives ending in ऋ or इन form their feminine with ई, इनित्यनेन णिन् घिणुन इत्यादीनां संग्रहः इन् includes णिन्, घिणुन &c. ऋ यथा कर्त्री, दात्री, वक्त्री, भवित्री "समादिदेशैकवधूं भवित्रीं" "कथ मिव तव सम्मतिर्भवित्री" राजकगोत्रवृत्तिवक्त्रीमिह त्वां करवाणि वाणि"। इन् दण्डिनी, स्थायिनी, ग्राहिणी "लसत्तरलहारिणी" मदनसरङ्गभूता पुष्करिकामप्युपान्तवर्त्तिनीमनादृतय" "छत्रग्राहिणीमामव्रवीत्" एवं मानिनी, मालिनी, आगामिनी प्रभृतयः।

१४। शत्रुप्रतययान्तेभ्यश्च।

शत्रुप्रतययान्तेभ्यश्च ङीः स्यात्।

Verbal adjectives (Parasmaipadi present participles) in अत् form their feminine with ई. तत्र ङ्यां परस्यां भू, दिव्, चुरादीनां नुम भवति, तुदादीनां अदाद्यादन्तानाञ्च विकल्पेन नुम् भवति। the verbs of the भू, दिव् and चुर classes taking a nasal न before ती and the verbs of the तुद class and अद class ending in आ optionally taking the same. यथा—गच्छन्ती, "गच्छन्त्यः सपदि पराजयं तरुण्यः" स्निह्यन्ती "स्निह्यन्तीदृशमपरानिधाय पूर्णं" धारयन्ती "अन्यूनं गुणममृतस्य धारयन्ती" एवं "विश्रंसयन्ती नव कर्णिकारं" "जिघांसन्तीव अमणिकां" अप्नोतपिवतीयन्ति प्रसिता स्मरकर्म्मणि" "अपारयन्ती किल पुष्पजं रजः" &c. तुदादयो यथा—इच्छती, इच्छन्ती "नेच्छन्ती समममुना सरोऽवगाढुं" "इति प्रियं काञ्चिदुपैतुमिच्छतीम्। अदादयो यथा—स्ना—स्नाती, स्नान्ती "स्नान्तीनां बृहदमलोदबिन्दुचित्री" अन्येषां यथा यत्—यती, "तद्दृष्टं तदवयती किलात्मनोऽपि" दधत्—दधती "योषितां विदधती गुणपक्षे" कुर्व्वत्—कुर्व्वती "सरितः कुर्व्वती गाधाः" रुन्धत्—रुन्धती "रुन्धती नयनवाक्यविकासं" वृण्वत् वृण्वती "विवृण्वती शैलसुतापि भावम्", बध्नत्—बध्नती "सीमन्तं निजमनुबध्नती कराभ्याम्" &c. भविष्यति शतृप्रत्ययान्तानामपि विकल्पेन नुम्भवति, verbal adjectives in स्यत् (Parasmaipadi future participles) also form their feminine with ई, and optionaly insert न् before ती, करिष्यत्—करिष्यती, करिष्यन्ती, एष्यत्—एष्यती, एष्यन्ती "सचिन्तयतेव भियस्त्वदेष्यतीः "तौ हि मूलमुदेष्यन्त्या जिगीषोरात्मसम्पदः।"

१५ ॥ क्वसु प्रत्ययान्तेभ्योऽपि ।

क्वसु प्रत्ययान्तेभ्योपि स्त्रियां ङीः स्यात् ।

Verbal derivatives in वस् form their feminine with ई and वस् is changed into उष् before ई, यथा विद्वस्—विदुषी "उपायमन्यं विदुषी स्वमृत्यवे, निषेदिवस्—निषेदुषी निषेदुषी" स्थण्डिल एव केवले उपेयिवस्—उपेयुषी जगतः शान्तये समुपेयुषी ।

१३ । न शेषान्तेभ्यः ॥

उक्तेभ्योऽन्ये शेषास्तदन्तेभ्यः कृदन्तविशेषणेभ्यो न स्त्री प्रत्ययो भवति verbal derivatives in क्विप्, क्विन्, णि, उ, इष्णु, स्नु, नु, आलु, आरु and इ &c. have the same base in three genders. क्विप् यथा—उखास्रत्, पर्णध्वत्, सोमसुत्, प्रतिपत्, रत्नसूः, "प्रथमा वहुरत्नसूरभूत्," "प्रसूतिमिनः प्रणुदां श्रुतीनां" "लघ्वी स्निग्धा त्रिदोषजित् &c. क्विन् ईदृश्, यादृश्, तादृश् "छायेदृगस्य च न कुत्रचिदध्यगामि" णि यथा धनभाज् "पत्न्यभावे दुहितरोऽपुत्रविभक्ता संसृष्टि धनभाजः" उ यथा—इच्छु, दिदृक्षु, "संकथेच्छुरभिधातु मनीशा, सम्मुखी न च वभूव दिदृक्षुः" इष्णु रोचिष्णु "मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्म्मिणी" आलु यथा "भव मानिनि जीविते दयालुः" आरु यथा "स्त्रीभिस्त्व वन्दारुभिः सह" इ यथा "वीरुधः फले ग्रहय एवासन्" खि यथा कुक्षिम्भरिः, उदरम्भरिः । एवमन्यत्र ज्ञेयम् ।

अथ तद्धितप्रत्ययनिष्पन्नानां विशेषनियमा उच्यन्ते । Rules for nominal derivatives.

१। वत्, मत्, इन्, विन् मिनन्तेभ्यो ङीः।

एतदन्तेभ्यो विशेषणेभ्यो ङीः स्यात्।

Adjectives ending in वत्, मत्, इन्, विन्, मिन (meaning possesing) form their feminine with ई. यथा कुमुद्वत् कुमुद्वती, लज्जावत्—लज्जावती "लज्जावती लाज विसर्गमग्नौ" श्रीमत्—श्रीमती "श्रीमत्याः सरसि गलन्मुखेन्दुकान्तेः" शैवलिन्—शैवलिनी, "शुचीरपः शैवलिनीर्दधानं" मनस्विन् मनस्विनी—"मनस्विनीमानविघातदक्षं" गोमिन्—गोमिनी "धूमिनी, गोमिनी, निम्ब्रवती, नितम्बत्यः प्रमाणम्। यावदादिभ्योऽपि ङीः स्यात्।

यावत्, तावत्, इयत् &c. come under this rule "इयती वेला एवं यावती, तावती कियती। अन्तर्वत् पतिवतोर्नुक् (४।१।३२) एतयोः स्त्रियां नुक् स्यात् ङी च। अन्तरस्त्यस्याङ्गर्भ इति विग्रहे अन्तःशब्दस्याधिकरण शक्तिप्रधानतयाऽस्ति सामान्याधिकरण्याभावादप्राप्तो मतुप् निपात्यते, पतिवत्नीत्यत्र तु वत्वं निपात्यते, अन्तर्वत्नी and पतिवत्नी are applied to women, स्त्रीभिन्ने तु पति मती पृथिवी but we find "पतिमती पृथिवी" एवं वन्धुस्त्रियो वा पतिपुत्रवतरः इति कुमारसम्भवं।

२। अण् (ण) मयष्टिकतनटेयनद्घ्नद्वयसमात्रचरान्तेभ्योऽपि।

एदन्तेभ्योऽपि विशेषणेभ्यो ङीः स्यात्।

Adjectives ending in अ (belonging to) मय (made of, consisting of), इक (rarely, relating to) तन of, after words meaning time) टेय (concerning), दघ्न, द्वयम् and मात्र (measuring, extending, चर (formerly) form their feminine in ई. अण (ण) यथा ऐन्द्र ऐन्द्री, सैन्धव, सैन्धवी "अद्भिस्तथा लावणसैन्धवीभिः"

औत्सी, शणतान्तव—शणतान्तवी" "वैश्यस्य शणतान्तवी" साप्त-पौरुष—साप्तपौरुषी, "पितृणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी". हैमनी "रजनीष्वपि हैमनीषु" आस्माक—आस्माकी आस्माकीं श्रियमनपायिनीं तनोति" &c. मयट—अस्थिमय, अस्थिमयी "मनुष्यास्थिमयीं मालां कपाले रजत-प्रभे" हिरण्मय—हिरण्मयी "हिरण्मयी सीता प्रतिकृतिः" पुष्पमय—पुष्पमयी "तस्याः पुष्पमयी शरीरलुलित शय्या" ओष्ठमय—ओष्टमयी "कर्णनासौष्ठमयीभिस्तिसृभिराहुतिभिः प्रायश्चित्तयाञ्चकार" "लावण्यमयी छाया" टिकण यथा याद्दच्छिक—याद्दच्छिकी "याद्दच्छिकीं सम्पत्तिमनभिसमीक्ष्य", आभ्युदयिक—आभ्युदयिकी—वशिष्ठोक्तैर्मन्त्रैर्दधति जगतामाभ्युदयिकीः" सनातन—सनातनी "सनातनी मा सुषुवे सरस्वती" अधुनातन अधुनातनी "त्वस्त्वया सुखसंवित्तिः स्मरणीयाधुनातनी"।

टेयण यथा आतिथेयी "तमातिथेयी" "आतिथेयीमथासाद्य सुतादपचितिं हरिः" "पारिखेयी भूमिः"। दघ्नट् यथा ऊरुदघ्नी द्वयस—ऊरुद्वयसी गजपतिद्वयस—गजपतिद्वयसी "गजपतिद्वयसीः सरितः" मात्रट् यथा—ऊरुमात्र—ऊरुमात्री "नैव द्यां भगवानुपञ्चति शशी गव्युतिमात्रीमपि" चरट्—ब्राह्मणचर—ब्राह्मणचरी, जातचर जातचरी "तवानने जातचरीं निपीय गोतिम्" टिक 'आकालिकीं वीक्ष्य मधुप्रवृत्तिं', पथिक पथिकी एवं आह्निकी, वार्षिकी, साम्वत्सरिकी &c. इक प्रत्ययान्तेभ्यस्तु आप् स्यादेव। यथा क्षणिक—क्षणिका "एकस्य क्षणिका प्रीतिः" एवं आकालिका, टायन प्रत्ययान्तेभ्योऽपि ङीः स्यात् Adjectives

derived with टायन form their feminine with ई. यथा कापिशायनी द्राचा. तदत्र क्रीड़ायां प्रहरणमिति ण प्रत्ययान्तेभ्यस्तु स्त्रियां आप् स्यात् Adjectives derived with ण and applied to sports, form their feminine with आ. यथा दण्ड: प्रहरणमस्यां क्रीड़ायां दाण्डा, एवं मौष्टा, श्येनम्पाता मृगया, तैलम्पाता स्वधा. मात्रशब्दान्तेभ्यस्तु आप् स्यात् In compounds having the word मात्र in last form feminine in आ यथा तन्मात्रा, &c.

३ । ईयसु प्रत्ययान्तेभ्यश्च ।

ईयसु प्रत्ययान्तेभ्यश्च ङी: स्यात् ।

Comparatives in (ई or उ) यस form their feminine in ई, यथा गरीयस्—गरीयसी "वृद्धस्य तरुणी भार्य्या प्राणेभ्योऽपि गरीयसी" महीयस्—महीयसी, ज्यायस्—ज्यायसी "स्तुतिरिति जगदे फल ज्यावसी" भूयस्—भूयसी "विप्रसादकृत भूयसीर्भुव: एवं श्रेयस् श्रेयसी &c.

४ । पूरणार्थ प्रत्ययान्तेभ्यश्च ।

पूरणार्थक डट् तमट् इत्यादि प्रतययान्तेभ्यश्च स्त्रियां ङी: स्यात् ।

Ordinals form their feminine in ई. द्वादशानां पूरण: इति डट् प्रत्यये द्वादश: सर्ग: स्त्रियां द्वादशी तिथि:, चतुर्द्दशी, विंशो कारिका, "भाद्रमास्यसिते पक्षे अघोराख्या चतुर्द्दशी" शतस्य पूरण: तमट् प्रत्यये शततम: स्त्रियां शततमी, "नार्थकामौ धर्म्मस्य शततमीमपि कलां न स्पृशत: । एवं चतुर्णां पूरण: थट् प्रत्यये चतुर्थी, षष्ठी, पञ्चाणां पूरण: मट् प्रत्यये पञ्चम:, पञ्चमी, तथा,

सप्तमी, अष्टमी, दशमीत्यपि। मासतम (monthly), वत्सरतम (yearly), अर्द्धमासतन (bimonthly) शब्देभ्यो ङीरेव स्यात्। form their feminine with ई, मासतमी पत्रिका.

Exceptions अपवादाः।

प्रथम (the first), द्वितीय (the second), तृतीय (the third) and तूरीय तूर्य्य (the fourth) शब्देभ्यः पूरणवाचकेभ्य आप् स्यात् form their feminine in आ, प्रथमा, द्वितीया, तृतीया, तूरीया तूर्य्या. "प्रथमा कहु रत्नसूरभूद्द्वितीया वीरमजीजनत् सुतम्" रघु. त्वमेव कल्याणि तयोस्तृतीया" रघु एवं अग्रिम, आदिम, चरम, मध्यमेभ्य आप् एव। So आदिम &c. form their feminine in आ, but they are not ordinals अग्रिमा, मध्यमा &c. एकविंशतमा जातीरित्यार्षप्रयोगएव एकविंशतमा is a Arsha Prayoga. एकविंशतमी is the correct form.

५। तयडयट् प्रत्ययान्तेभ्यश्च।

संख्याया अवयवे तयट् विभाषा द्वित्रेरयट् इति सूत्राभ्यां यौ तयट्, अयट् प्रत्ययौ तावन्ते येषां, तेभ्यो ङीः स्यात्।

Adjectives from numerals with मय or अय form their feminine in ई, चतुष्टयी, द्वयी, द्वितयी, त्रयी, त्रितयी "चतुष्टयी शब्दानां प्रवृत्तिः" "वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः" "अतद्द्वयी जित्वरसुन्दरान्तरे" "औदार्य्यदाक्षिण्यदया दमानां चतुष्टयी रक्षणसौविदल्ला" परन्तेषां प्रायः विशेष्यत्वं क्लीवत्वञ्च दृश्यते They are however generally found as substantives in neuter gender. "कोटिश्चतुष्टयं यत्र दोस्त्रयं तत्र का श्रुतिः।" तियट् प्रत्यया-

न्तेभ्योऽपि ङीः स्यात् Adjectives in तिथ form their feminine in ई also. यथा वहुतिथ—वहुतिथी ।

६ । टायनन् टेयनादिभ्यश्च ।

एतदन्तेभ्योविशेषणेभ्यो ङीः स्यात् ।

Patronymics आयन, एय &c. form their feminine in ई, यथा दाचायण—दाचायणी यथा "दाचायण्या पतिव्रतापुख्यमधिकृत्य दृष्टं ।" वार्ष्णेय—वार्ष्णेयी "मा शोकं कुरु वार्ष्णेयि कुमारं प्रति सस्नुषा" "पैतृष्वस्रेयीं गत्वा तु" अपत्यार्थे अण्प्रत्ययान्तेभ्योपि ङीः स्यात्, यथा पर्व्वतस्यापत्यं स्त्री पार्व्वती, यथा "तां पार्व्वतीत्याभिजनेन नाम्ना" एवं पृषतोऽपत्यं स्त्री पार्षती" निर्दिष्टा भवतां पत्नी कृष्णा पार्षत्यनिन्दिता" गर्गस्य गोत्रापत्यं स्त्री गार्गी, गार्ग्यादेष्टेरायनश्च वहुलं । गार्ग्यादेः स्त्रियां ङीः स्यात् टेरायनश्च वहुलं । (Supadma ५ । १२ । १२) The feminine forms of गार्ग्य &c. are गार्गी, गार्ग्यायनी, वात्सी, वात्सायनी, लौहित्यादेर्नित्यं—लौहित्यायनी, शाकल्यायनी, माधव्यायनी, वाभ्रव्यायनी, काप्यायनी, वातण्डी, वातण्ड्यायनी, कौरव्यायनी, आसुरायणी, माण्डूकायनी तस्येदमित्यणन्तात्तु कुरोरियं सेना कौरवी सेना न तु कौरव्यायनी, एवं मण्डूकस्य भार्य्या माण्डूकी नतु माण्डूकायनी, आवट्याद्दाप् च The feminine forms of आवट्य are आवट्या, आवट्यायनी ।

७ । स्त्रियामवन्तिकुन्तिशूरसेनादिभ्यः ।

स्त्रियां वर्त्तमानेभ्य एभ्यः ङीः स्यात् ।

When अवन्ति, कुन्ति &c. denote their respective female inhavitants have ई in end.

यथा अवन्ती, कुन्ती, शूरसेनी, कैकेयी, केकयी च एवं

१

पाञ्चाली, वैदेही, मागधी, आङ्गी, वाङ्गी, भार्गी, वैराटीत्यादि.
"अब्रवीत् किल दाशार्हं वैराटीमार्जुनिस्तदा।

८। अपत्यार्थेणन्तेभ्योवार्ष्णिप्रभृतिभ्यः। ङीः स्यात्।

There are patronymies in इ as वार्ष्णि &c which take ई in the feminine. यथा वाशिष्ठी, आह्निक्ती, वार्ष्णी, कार्ष्णी &c.

९। नस्नान्तेभ्यः। ङीः स्यात्।

Those ending न or स्न have ई in their feminine यथा पौंस्नी।

१०। उदन्तेभ्य ऊङ्।

उदन्तेभ्यः स्त्रियां ऊङ् स्यात्।

Those ending in उ have ऊ in their feminine. यथा कुरू, पाण्डू, ब्रह्मबन्धूः, पङ्गूः।

आलुप्रत्ययान्तेभ्यस्तु न ऊङ् तेषां त्रिषु लिङ्गेषु समानरूपमेव
Adjectives formed whith आलु remain unchanged in three genders. यथा "शीतालुः सलिलगतेन सिच्यतेस्म, एवमहंयु शुभंयु शब्दयोरपि त्रिषु समानरूपं so अहंयु and शुभं यु do not change.

११। अणिनोऽनार्ष्याद्गोत्रे याप्।

गोत्रे विहितौ यावणिनौ तदन्तात् स्त्रियां याप् स्यात्।

Patronymies ending in अ and इ (not relating in a ऋषि) form their feminine in या. करीषगन्धगोत्रापत्यं स्त्री कारीषगन्ध्या, इण—वाराह्या. गोत्र इति किम् when not patronymies वराहस्य इयं वाराही "वाराहीं बिभ्रती तनुं" क्रोड़ादेश्च—

क्रौड़िप्रभृतेश्च स्त्रियां याप् स्यात् क्रौड़ि &c. form their feminine in या क्रौड्या, नाड्या क्रौड्यादिगणो यथा The following are क्रौड़ि class क्रौड़ि, नाड़ि, आपिशलि, सौधातकि, भौरिकि कापिष्ठलि &c. भोजात् क्षत्रियजातौ याप् स्यात्। The feminine form of भोज meaning a क्षत्रिय is with या, भोज्या "भोज्यां प्रति व्यर्थमनोरथत्वात्।" कुलनाम्नश्च The feminine forms of words meaning a family are in या. यथा पौतिक्या, मौखर्य्या, सौध्या. &c. दैवयज्ञ्यादेर्व्वा the feminine forms of दैवयज्ञि &c. take या optionally. दैवयज्ञ्या, दैवयज्ञी वा, दैवयज्ञ्यादिगणो यथा The following are included in to दैवयज्ञि class-दैवयज्ञी, शौचि, वृक्षि, सात्यमुग्धि, काण्डविद्धि पाशादिभ्यः समूहार्थे स्त्रियां याप् स्यात्। The words पाश &c. denoting collective sense are in feminine gender with याप्, as पाशानां समूहः पाश्या, तृण्या, वन्या, वात्या &c.

१२। अनेरसरो आप्।

अन्येभ्यस्तद्धितप्रत्ययान्तेभ्य आप् स्यात्।

Others ending in ईय, इय, य, ईन, पाश, विध, इत, कल्प, देश्य, देशीय, रूप, रूप्य, इष्ठ, तर, तम, वल, र, उर, ल, रल, अत, आल, इन, ईम, भ, ट, ठ &c. form their feminine in आ. ईय यथा मदीय—मदीया 'अथ ताम्बूलकरङ्कवाहिनी मदीया तरलिका नाम" एवं तदीया, यदीया, स्वीया "स्वस्त्रीयां मातुरेव च:" य हृद्य—हृद्या हृद्यां द्वादशवार्षिकी" एवं तथ्य—तथ्या "तथ्यामृतथ्यानुजवत्" ईन सर्व्वाङ्गीण—सर्व्वाङ्गीणा "सर्व्वाङ्गीणे लरुलचौ" समांसमीन समांसमीना "समांसमीना सा चैव प्रति-

वर्षं प्रसूयते" विध एवंविध—एवंविधा "एवंविधाभिरन्याभिः कथाभिः" इत पुष्पित—पुष्पिता, तारकित—तारकिता "द्यौ-राचिता तारकितेव रेजे" कल्प मृणालकल्प—मृणालकल्पा "मृदु-वालमृणालकल्पा" देशीय अष्टादशवर्षदेशीय—अष्टादशवर्ष-देशीया "अष्टादशवर्षदेशीयां कन्यकां ददर्श" रूप घोररूप—घोररूपा "घोररूपा भयानका" त्यन् यथा ततस्त्यः ततस्त्या "ततस्ततस्त्या विनियन्तुमक्षमा। एवं यत्रत्या, तत्रत्या, तर क्षुद्रतर क्षुद्रतरा क्षुद्राभिरक्षुद्रतराभिराकुलं एवं "रिपुतरा भव-नादविनिर्य्यतो" तम प्रियतम प्रियतमा "प्रियतमा यतमानमपा-हरत्" इष्ठ वरिष्ठ—वरिष्ठा "वरिष्ठा चतुष्पदा," यण—कौशल्य—कौशल्या "अर्च्चिता तस्य कौशल्या प्रिया केकयवंशजा" वल रजस्वल—रजस्वला "रजस्वला भूर्शोद्विग्ना वीक्ष्यमाणा दिशोदश" इर रुचिर—रुचिरा "अम्बरस्य रुचिरा तनुभासा" ल वहुल—वहुला दृष्टिः, जटिल—जटिला "मधुकरपटलजटिलाभिः" आल वाचाल—वाचाला "वाचालाऽसि सरस्वति व्रज गृहान्" आट वाचाट—वाचाटा "न वाचाटां न पिङ्गलां" इक यथा पदोत्तर-पदिक—पदोत्तरपदिका, शतपथिक—शतपथिका, अलोमिक—अलोमिका &c. कान्तानां विशेषनियमा यथा (१) उपधाऽवर्णस्य इकारः, अ or आ before क chnages in to इ. यथा अम्बिका, सांकाश्यिका, सुनयिका, सुपादिका, शुभटिका, परमिका "आर्त्तिं परमिकां जग्मुः" एवं "नासिकां नातिलोमां न च भीषण-नामिकां" लता लतिका "कार्व्याङ्गिरङ्गलतिका नियतं विलुप्ता" एवमल्पक—अल्पिका &c. (२) यका प्रभृतीनामुपधावर्णस्य इकारो न भवति, अ or आ before क dose not change into इ in the fo-

llowing words यका, सका, कन्यका, वका, चिपका, तारका, चटका, "स्त्रियः कश्चित् प्रजायन्ते चतस्रः पञ्चकन्यकाः" एवं "तारकास्तत् करस्य हिमांशोः" एवमधित्यका, उपत्यका, वर्णका अपि इति केचित् A few other wods अधित्यका &c. are also added to this list. तारक शब्दस्य स्त्रियां तारिकेति रूपं भवति But the feminine form of तारक is तारिका अष्टका पितृदेवत्ये एवं देवका पक्षे देवदत्तिका, देवदत्तका च एवं वर्त्तका (२) वक्ष्यमाणेषु अवर्णस्य विकल्पेन इकारो भवति. अ or आ optionally changes into इ in the following words. यथा स्वका, स्विका, द्वका, द्विका, अजका अजिका, एषका एषिका, ज्ञका ज्ञिका, भस्त्रका भस्त्रिका, गङ्गका, गङ्गिका, पुत्रका, पुत्रिका, सूतका, सूतिका, वृन्दारका, वृन्दारिका, "हन्यात् स एनं यो हन्यात् कुलधर्म्मं स्विकां तनुं" "आर्य्या पुत्रः स्वका तनुः" "साधितेयं लक्षग्राहिणी चर्म्मभस्त्रिका" "योषिद्वृन्दारिका तस्य दयिता हंसगामिनी।

एवं आर्य्यका, आर्य्यिका, चटकका चटकिका &c. अ कपि क after Bahubrihi compound is sxcepted सदेवताकः, सद्वक्कः आपः कपि वा ह्रस्वः In Bahubrihi compounds आ optionally becomes अ (not इ) before का, गृहीतनीलप्रावरणकाभिरिव विराजित मासमाद।"

१२। ह्रस्वोऽन्येषाम्।

के परेऽन्येषां स्वराणां ह्रस्वः स्यात्।

In other cases only the final vowel is shortened. यथा गोपिका (from गोपी,) चर्च्चरिका (from चर्च्चरी), द्विपदिका

(from द्विपदी) "साहसमालोकयतिस्म गोपिका:" "चर्चरिकयोपसृत्याञ्जलिं बद्ध्वा" "शुद्धा द्विपदिका गीति: सैव जम्भलिकोच्यते बहुव्रीहौ न ह्रस्व: In predicative compound the long vowel in the last member is not shortend before का यथा "वेल्लितबाहुवल्लरीका" सलक्ष्मीका, ; मामक शब्दस्य स्त्रियां मामिका इति रूपं स्यात्, तथा नरकस्य नरिका: ।

## समस्तविशेषणानाम् ।

Rules for compond words..

१ । बहुव्रीहावदन्तेभ्य आप् ।

Predicative compounds ending in अ generally form their feminine in आ. यथा वीतवलाहक-वीतवलाहका, "दृष्टेर्दिवो वीतवलाहकाया:, एवं "परिश्रमक्लान्तविलोचनोतपला:" "निबद्ध नि:श्वास विकम्पिताधरा" "लता इव प्रच्छुरितैकपल्लवा," "स्फुरद्धीरतडिन्नयना" "मदेकपुत्रा जननी जरातुरा" "साहमेवंविधा निर्लक्षणा, निर्लज्जा, निष्प्रयोजनोपपन्ना, निष्फलजीविता, निरालम्बना, नि:सुखा च किं मया कृतब्राह्मणवधमहापातकया महाभाग ।

२ । स्वाङ्गादप्रधानात् ङी: ।

अप्रधानात् स्वाङ्गात् ङी: स्याद्वा ।

Words ending in अ and expressing limbs when applied

to females, form their feminine in ई optionally. दीर्घकेशी, दीर्घकेशा, केशानतिक्रान्ता अतिकेशी, अतिकेशा च, नखमुखादसंज्ञायां When compound words having नख or मुख at the end are not proper names, their feminine is optionally formed with ई. सुनखी, सुनखा, सुमुखी, सुमुखा. चन्द्रमुखी, चन्द्रमुखा, असंज्ञायामिति किम्, When they are proper names, their feminine forms are in आ. शूर्पणखा, कालमुखा, असंयोगोपधादिति वक्तव्यम् limbs preceded by a combined consonant are excepted, यथा सुगुल्फा, वन्धुरस्कन्धा, वह्वचां प्रतिषेधः words in more than two syllables are also excepted पृथजघना, सुनयना, &c. न क्रोड़ादेः। क्रोड़ादेर्ङीन्न स्यात्, आप् तु स्यादेव क्रोड़ &c. are excepted, so they take आ. कल्याणक्रोड़ा, सुक्रोड़ा, क्रोड़ादयो यथा the following are क्रोड़ class.

क्रोड़, खुर, वाल, शफ, गुद, प्रोथ, गल, भाल, भग, शुक, अप्रधानादिति किम्, शिखा, शोभनशिखा—सुशिखा इति सिद्धान्तकौमुदी तत्तु न सम्यक् शिखाशब्दस्यादन्तत्वाभावादप्राप्तेः this is not correct as the word शिखा does not end in अ, it is not subject to this rule at all. स्वाङ्गन्तु त्रिधा limbs are of three kinds यथा (१) अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजं (1) a limb is defined to be hard not liquid, having a shape and naturally belonging to an animal, and contrary to this is not a limb and consequently this rule does not apply to this क्रमेण यथा सुस्वेदा द्रवत्वात् (स्वेद घर्म्म is a liquid thing) एवं वहुकफा &c. मूर्त्तिमत् किम्, सुज्ञाना, वहुज्ञाना (ज्ञान means knowladge

having no shape at all) प्राणिस्थं किम्, दीर्घमुखा शाखा (a long spreading branch) सुमुखा शाला (a house having good opening) "एवं एतन्मुखा विबुधसंसदसावशेषा" स्वाङ्गशब्दस्याव-यववाचित्वे "सुमुखो शालेति स्यात् द्वाररूपमुखस्य शालाङ्ग-त्वात् If स्वाङ्ग is taken in its usual sense e. i. a part of the whole then we would have "सुमुखो शाला" and not सुमुखा for मुख (door) is a part of a house and on the other hand केशा-नाञ्च रथ्यानङ्गतया सुकेशी रथ्येति न स्यात् we would never have सुकेशी रथ्या (a road in which beautiful hairs are found) for hairs are not parts of a road अतः स्वाङ्गशब्दस्य परिभाषार्थपरता दर्शिता hence the defination is necessary इति सिद्धान्तकौमुदी टीका, अविकारजमिति किम्—बहुशोथा (शोथ is a disease and not naturally belongs to an animal) (२) अतत्स्थं तत्र दृष्टञ्च यत् केवलं प्राणिनि दृष्टं भवति, तत् कदाचित् अप्राणिनि स्थितमपि स्वाङ्गं If a limb naturally belonging to an animal is occasionally found in an inanimate thing it will be subject to this rule यथा दीर्घकेशो दीर्घकेशा वा रथ्या (a road in which long hairs are found) अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् Thaogh hairs are found here in an inanimate thing (road) but they naturally be-long to an animal.

(३) तेन चेत् तत्तथायुतम्। यदस्तु यथा प्राणिनि वर्त्तते, अप्राणिना चेत् तथा युक्तं भवेत् तदपि स्वाङ्गम्। If a limb natu-rally belonging to an animal is adhered to an inanimate thing in the same manner will be subject to this rule. पृथुस्तनी

पृथुस्तना वा प्रतिमा, सुस्तनी, सुस्तना वा शालभञ्जिका प्राणिवत् प्राणिसदृशे स्थितत्वात् (Here breasts are adhered to a female representation in the same manner as they are originally found to a woman.

सह, नञ्, निर्, विद्यमान पूर्व्वाणां प्रतिषेधः। If words expressing limbs preceded by सह (स), ष, निर् or विद्यमान are applied to a female they do not take ई but आ. यथा अकेशा, सुदन्ता, अविद्यमानकेशा &c.

३। नासिकाक्षुदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठाच्च ॥

एभ्यो बह्वचसंयोगोपधेभ्योऽपि ङीर्वास्यात्।

नासिका, अक्ष (from अक्षि), उदर, ओष्ठ, जङ्घा, दन्त, कर्ण, शृङ्ग, अङ्ग, गात्र and कण्ठ optionally take ई when applied to a female representations, note in previous rule, words in more than two syllables and succeeded by a combined consonant were excepted. while here such exception is avoided. यथा तुङ्गनासिकी, तुङ्गनासिका, तनूदरी, तनूदरा; विम्बौष्ठी, विम्बौष्ठा; दीर्घजङ्घी, दीर्घजङ्घा; समदन्ती, समदन्ता; चारुकर्णी, चारुकर्णा; तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा; मृद्वङ्गी, मृद्वङ्गा; सुगात्री, सुगात्रा; कम्बुकण्ठी, कम्बुकण्ठा।

"वहुलमधुपमालाकज्जलेन्दीवराक्षी" शिशु। "अध्यास्तभूषणभरातितरालसाङ्गी" नैषध। "आभिर्मृगेन्द्रोदरि कौमुदीभिः" नैषध। "स्रस्तस्रजं स्मितसुधामधुराधरौष्ठी" "किमिदं किन्नरकण्ठि सुप्यते" रघु। "तत्रामरालयमरालमरालकेशी" नैषध। "नानाविभूषणविभूषितचारुगात्रि" "जगाद भूयः सुदतीं

सुनन्दा" रघु। "कुब्जलदन्तो विकटनितम्बा किन्नरकण्ठी लघुतरमध्या" पिङ्गल। "तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य" "स स्रग्धरा वल्गितपीवरस्तनी" "हेमशृङ्गी पयस्विनी"।

४। पुच्छाच्च। ङीर्वा स्यात्।

पुच्छ optionally takes ई when applied to females or female representations. यथा, दीर्घपुच्छी, दीर्घपुच्छा वा; सुपुच्छी, सुपुच्छा वा। कवर, मणि, विष, 'शरेभ्यो नित्यम् एभ्यः पुच्छान्नित्यं ङीः। when पुच्छ preceded by कवर, मणि, विष, and शर, takes ई, and not आ. कवरश्चित्रं पुच्छं यस्याः सा कवरपुच्छी मयूरी, एवं मणिपुच्छी, विषपुच्छी, शरपुच्छी। उपमानात् पक्षात् पुच्छाच्च नित्यमेव। पक्ष and पुच्छ must take ई when expressing comparison यथा उलूकपक्षी सेना, काकपुच्छी कोकिला।

५। दिक्पूर्व्वपदाच्च॥

दिक्पूर्व्वपदात् स्वाङ्गात् ङीः स्यात्।

When words expressing a limb are preceded by words meaning directions, they take ई in the feminine प्राङ्मुखी, अवाङ्मुखी, "पराङ्मुखी विश्वसृजः प्रवृत्तिः" "शस्ता न हंसाभिमुखी च यात्रा" इत्यपि दृश्यते। क्वचिदन्यथापि we find also "अनागसोभर्त्तृपराङ्मुखायाः"।

६। वहुव्रीहेरुधसो ङीरनङादेशश्च।

ऊधोऽन्ताद्वहुव्रीहेर्ङीः स्यात्, अनादेशश्च स्त्रियां।

ऊधस् becomes ऊध्नी in the feminine, घटोध्नी, कुण्डोध्नी, बृहदूध्नी, अल्पोध्नी "भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृतादपि" रघु।

स्त्रियां किम् This rule applies only to the feminine कुण्डोध्नी धेनुकम्, गवां गणाः प्रस्नुतपीवरोधसः, बहुव्रीहेरित्येव note in other compound ऊधोऽतिक्रान्ता अत्यूधाः ।

७। संख्यादेर्दाम्नो हायनाच्च वयसि ।

संख्यादेर्दाम्नो हायनाच्च वयसि गम्यमाने ङीः स्यात् ।

When दामन् and हायन् preceded by a numeral द्वि त्रि &c. necessarily become दाम्नी and हायनी respectively त्रिदाम्नी त्रिहायनी गौः. चतुष्त्रिहायणीहेयकहायन्येकादिवर्षिका इति हेमचन्द्रः । संख्यादेरिति किम् ? Note when not preceded by a numeral उद्दामा वड़वा, "वद्धदर्भमयकाञ्चिदामया" वयोवाचकस्यैव हायनस्य ङीः This rule applies to हायन in the sense of age only अन्यत्र note द्विहायना, त्रिहायना चतुर्हायना शाला ।

८। वाऽन्यपदार्थे नित्यं सपत्न्यादौ तु ।

अन्यपदार्थे स्त्रियां पत्युर्ङीर्वा स्यात्, नित्यन्तु सपत्न्यादौ ।

In predicative (बहुव्रीहि) compound पति, optionally changes into पत्नी, but in the cases of सपत्नी &c the change is invariable (नित्य), वृद्धपत्नी, वृद्धपतिः, दृढ़पत्नी, दृढपतिः ; वृषलस्य पत्नी वृषलपतिः । पाणिनिमते षष्ठीतत्पुरुषसमासादावपि नियमस्यास्य प्रवृत्तिर्दृश्यते According to Panini this rule applies to other compounds also, यथा गृहस्य पतिः गृहपतिः गृहपत्नी वा (the lady of the house) while other Grammarians use the word पत्नी in those cases. पाणितिमते पत्युरेव यज्ञसंयोगे पत्नी भवति न तु पत्नी शब्दोऽस्ति (४।१।३३) But Panini does not acknowledge the existence of a separate word पत्नी but पति denoting

sacrificial connection becomes पत्नी in the feminine. यथा वशिष्ठस्य पत्नी तत्कर्तृक यज्ञफलभोक्त्रीत्यर्थः दम्पत्योःसमानाधिकारात् एवं सति वृषलस्य पत्नीत्यत्र का गतिः यज्ञसम्बन्धाभावादिति चेत् पत्नीव पत्नीत्युपचारात् consequeantly in want of sacrificial connection वृषलस्य पत्नी is an absurd one. Bhattoji Dikshita says पत्नी is used here in its secondary sense one taken for a पत्नी (wife) तथा विधोपचाराभावे तु गवाम्पतिः स्त्रीत्येव स्यात् but when it dose not exprss one taken for a wife no change takes place गवाम्पतिः (स्त्री) पाणिनि मते गोपत्नीति तु स्यादेव । The followers of पाणिनि cannot object in the compound form गोपत्नी. सपत्न्यादौ तु नित्यमेव This rule invariably applies to सपत्नी, &c एवं एकः पतिर्य्यस्याः सा एकपत्नी "कामिकपत्नीं व्रतदुःखशीलां" एवं वीरपत्नी, भ्रातृपत्नी &c. भर्त्तृभिन्नार्थे तु न स्यात् But when पति is used in any other sense than a husband this rule dose not apply to it बह्वः पतयो यस्याः सा बहुपतिः "पांशुला बहुपतिर्नियतं या।"

८। अन उपधालोपिनो वा ।

अनन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीर्वा स्यात् ।

Words ending in अन् optionally rejects अ and takes ई. in the feminine. यथा बहुराज्ञी, बहुराजा, बहुराज्ञ्यौ, बहुराजानौ एवं बहुतक्ष्णी, बहुतक्षा, सुधाम्नी, सुधामा वा "दातुं प्रदानोचित भूरिधाम्नीमुपागतः सिद्धिमिवास्मि विद्यां" "प्रतीपनाम्नीः कुरुतेस्म निम्नगाः उपधालोपिनोऽन्यस्मादनन्तान्नैव note when words ending in अन् do not reject अ, सुपर्व्वाणः सुशर्म्माणः स्त्रियः पक्षे

आप् च but such words opfionally takes आ also, नित्यं संज्ञायां See in cases of proper nouns बहुराज्ञी नाम ग्रामः।

१०। आप् अनोमनस्य।

अनन्तमान्मान्मनन्ताच्च बहुव्रीहौ आप् वास्यात् words ending in अन् (including वन् preceded or not by a consonant), or मन् optionally rejects न and adds आ in the feminine बहुयज्वा, बहुयज्वे बहुयज्वानौ, सुराजा, सुराजे सुराजानौ; एवं सुपर्व्वे, सुपर्व्वाणौ, "अङ्गुशाकारयाङ्गुल्या वेणु कर्कशपर्व्वया" बहुधीवे बहुधीवानौ, बहुधीवर्य्यौ च, मनन्तात्—सुसीमे सुसीमानौ, सुसीम्न्यौ च मनन्तादन्यत्रापि समासे this rule applies to words ending in मन् in other compound also : यथा अतिपटिमा, अति-पटिमे, अतिपटिमानौ असमासेऽपि words ending in मन् are also subject to this rule even when they stand alone, i.e. not compounded सीमा, सीमे सीमानौ; दामा, दामे दामानौ &c.

११॥ पादोऽन्त्रचि।

पादन्तात् ङीर्वास्यात् पाद। when last word in Bahubrihi compounds, changes in to पदी optionally. द्विपदी, द्विपात्; चतुष्पदी चतुष्पात्; शोभनः पादोऽस्याः सा सुपदी, सुपात्; व्याघ्रस्येव पादोऽस्याः व्याघ्रपदी, व्याघ्रपात्; सिंहस्येव पादोऽस्याः सिंहपदी, सिंहपात् हस्त्यादुपपदे तु पादस्यान्न क् न भवति but note हस्तिन इव पादोऽस्याः हस्तिपदी, हस्तिपादा, एवं कुण्डलपदी कुण्डलपादा कुम्भपद्यादिषु नित्यं we find कुम्भपदी & without option कुण्डपदी, शतपदी, एकोऽभिन्नः सर्व्वेषां पादोऽत्रेति

एकपदो पन्थाः, गोधापदोत्यादि । टाबृचि । ऋचि वाच्यायां पादान्तात् टाप् स्यात्. When implying ऋक् (Veda) पाद takes आ. द्विपदा ऋक्, एवमेकपदा, त्रिपदा, चतुष्पदा &c. "गायत्री सैकपदी, द्विपदी, त्रिपदी, चतुष्पद्यपद्यसि इत्यादि प्रयोगोऽपि दृश्यते We find also एकपदी द्विपदी, &c as adjectives to गायत्री अन्यथापि दृश्यते There are some exceptions also यथा "सकलभुवनजनगणनतपादा" "आसन्दिकां रोचिष्णुरत्नप्रत्युप्तपादां" पदशब्दादाप् एव, पद when last word in Bhahubrihi compound takes आ in the feminine यथा "लघुसन्देशपदां सरस्वतीं" "सा परिहार्य्या क्रौञ्चपदा ।"

१२ । ऊङ् ऊरूत्तरपदादौपम्ये संहित शफलक्ष्मणवामादेश्च ।

उपमानवाचि पूर्व्वपदं, उत्तरपदं यत् प्रातिपदिकं तस्मात्, संहित, शफ, लक्ष्मण, वामपूर्व्वाच्च ऊरुशब्दात् स्त्रियामूङ् स्यात् । ऊरु lengthens its final vowel in the feminine when there is comparison or when preceded by संहत, शफ, लक्ष्मण or वाम. यथा "करभोरु करोति मारुतः" एवं संहितोरूः, शफोरूः, लक्ष्मणोरूः, वामोरूः "वद वामोरु चिताधिरोहणम्" बाहुल्यादन्यत्रापि We find also "पिवोरुरम्भातरुपीवरोरुः" क्वचिन्नैव note "रम्भोरु केलिस्खलत्" सहित सहाभ्याञ्चेति वार्त्तिकम् Katyayana adds सहित and सह, सहितौ ऊरू यस्याः सा सहितोरूः, सहेते इति सहौ ऊरू यस्याः सहोरूः । नाऽन्यत्र in other cases, it does not lenthen the final vowel यथा "परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।"

१३। बाह्वन्तात् संज्ञायाम्। ऊङ् स्यात्।

Bhahubrihi compounds having बाहु the last word determining a proper name lengthens the final vowel, यथा मद्रबाहू: संज्ञायामिति किम् note when, they do not determine a proper name वृत्तबाहु: स्त्री।

१४। द्विगोस्तद्धितलुकि परिमाणात्।

परिमाणान्ताद्द्विगोस्तद्धितलुकि ङी: स्यात्।

Dwigu compounds expressing measures and rejecting तद्धित affixes after it takes ई in the feminine.

क्रीतार्थे—द्व्याढ़की, द्विप्रस्थी, परिमाणादिति किम्? note when do not express measure पञ्चाश्वा, लुकीति किम्? note when तद्धित afflxes are not rejected द्विपण्या, संख्यापूर्व्वकाल विस्त्याचितकम्बल्यान्तानां निषेध:। Those preceded by numerals or having last words meaning time or विस्त्य, आचित, or कम्बल्य are excepted. द्विशता, द्विवर्षा, द्व्याचिता, द्विकम्बल्या, एवं "प्राप्नोति चेत् शोड़शवत्सरा स्त्री द्वात्रिं शतं विंशति वत्सरा किम्?" इति लीलावती. एवं "उच्छ्रितिस्त्र्यङ्गुला यासां" यद्विस्तृति: पञ्चकरा" "षट्पञ्च सप्तहस्ता च विस्तृति: इत्यादि। काण्डादक्षेत्रे। काण्डाद्द्विगोस्तद्धितलुकि ङी: स्यात्। In Dwigu compound, काण्ड preceded by a numeral and denoting measure takes ई. But काण्ड applied to fields is excepted द्वे काण्डे परिमाणमस्या: द्विकाण्डी रज्जु:; अक्षेत्र इति किम् when applied to fields द्विकाण्डा क्षेत्रभक्ति:। पुरुषात् प्रमाणे वा। प्रमाणे वर्त्तमानात् पुरुषान्तात् द्विगोस्तद्धित-

लुकि ङीव्वा स्यात्। preceded by a numeral optionally takes ई when used to denote height द्विपुरुषी, द्विपुरुषा वा यष्टिः, त्रिपुरुषी, त्रिपुरुषा वा परिखा।

१५। पाक, कर्ण, पर्ण, वाल, मूलान्तात्।

जातिरित्येव पाकाद्यन्तात् ङीः स्यात् स्त्रीविषये। predicate (बहुव्रीहि) compounds having their last words पाक, कर्ण, पर्ण, वाल or मूल take ई in the feminine, when they do not denote species अमूला, अपर्णा &c। पुष्पादसदादिपूर्व्वात्। ङीः स्यात्। पुष्प not preceded by सत &c take ई in the feminine शङ्खपुष्पी, असदादिपूर्व्वादिति किम् note when preceded by सत् &c सत्पुष्पा, प्राक्पुष्पा, कान्तपुष्पा The following are included in to सत् class—सत्, प्राक्, प्रत्यक्, कान्त, प्रान्त, शत and एक। फलाद्यसमाद्यादेः। ङीः स्यात्। takes ई in the feminine. यथा दाड़िमफली। असमाद्यादेरिति किम्? note when preceded by &c सम्फला, भस्त्रफला। The following are included into the सम् class—सम्, भङ्ग, अजिन, शण and पिण्ड वाहश्च। एतदन्तात् ङीः स्यात् similar compounds having last word वाहु takes ई in the feminine यथा प्रष्ठौही, (from प्रष्ठवाह्,) शाल्यूही (from शालिवाह्). &c

१६। वक्ष्यमाण समस्तपदानां स्त्री पुंलिङ्गयोः समानरूपम्। स्पष्टम्।

Other predicative compounds have generally the same base in the masculine and feminine वारि अन्ताः (having as word वारि। "चूड़ा पीड़ कपाल सङ्कुल मीलन्मन्दाकिनी वारयः"

अम्बु-अन्ता: (having the last word अम्बु) "शरत् प्रसन्नाम्बुरनम्बु वारिदा:। श्री—अन्ता: (having the last word श्री। अधिश्रिय: स्त्रिय." एवं "इयं महेन्द्रप्रमुखानधिश्रिय:" भी—अन्ता (having भी as the last word "गतभीरियं, "गतभीराह्वत चेदिराट् मुरारि" जन्मन्-अन्ता: (having जन्मन् as the last word) "या कौमुदीनयनयोर्भवत: सुजन्मा," दृश् अन्ता: (having दृश् as the last word) वभ्राज विभ्रती पद्मं पद्मे वोन्निद्रपद्मदृक्," मनस्-अन्ता: (having मनस् the last word) "वीक्ष्य रन्तु मनस: सुरनारी:" वपुस्-अन्ता: (having the last word वपुस्)"इयं व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति"। एवमन्येषामुदाहरणतोऽज्ञेयम् So in other cases also, "मुकुलयति च नेत्रे सर्व्वथा सुभ्रु खेद: &c.

१७। गोस्त्रियोरन्यार्थे ह्रस्व:।

अन्यपदार्थे वाच्ये गोशब्दस्य स्त्रीप्रत्ययान्तस्य च ह्रस्व: स्यात्।

In predicative compounds the final vowels of गो and words in suffixes आ, ई, or ऊ related to the feminine gender are shortened in the masculine and neuter. यथा चित्रगु:, निष्कौशाम्बि:, अतिसर्व्व:, वहुवामोरु: एवं "स वेद नि:शेषमशेषितक्रिय:" "अधिकविकसदन्तर्व्विस्मयस्मेरतारै:" "वहुवल्लभा: खलु राजान: श्रूयन्ते" &c. अन्यार्थ इति किम् Note in other compounds शोभना गौ: सुगौ:, एवं सुकुमारी ; अश्र्यादे:। श्रीत्यादीनां ह्रस्वो न स्यात् this rule does not apply to श्री &c. सुश्री:, सुधी:, सुतन्त्री:, सुलक्ष्मी:, सुतरी:, सुभ्रू:। नापीयस:। ह्रस्वो न स्यात् nor to words in ईयसी वहुप्रेयसी राजा "परिरब्धप्रेयसीषु तरुणेषु महेषु" इयसस्तत्पुरुषे न प्रतिषेध: In तत्पुरुष

compounds denoting predicative sense words in ईयसी follow the general rule यथा अतिप्रेयसिः नृपः, (प्रेयसीमतिक्रान्त इत्यर्थः। (१)

स्त्रीप्रत्ययाः।

Suffixes in the feminine gender.

१। स्त्रियामतकुञ्चादेराप्।

स्त्रीलिङ्गेऽदन्तात्, क्रुञ्चादेर्हलन्ताच्च आप् प्रत्ययोभवति, Words ending in अ, as well as क्रुञ्च &c. including words ending in a consonant also take आ. in the feminine gender. खट्वा, बाला, कान्या. अत् इति तपरग्रहणान्नेह — Words originally ending in आ are not subject to this rule, संस्थाः स्त्री (सं+स्था+क्विप्) एवं शुभंयाः &c. क्रुञ्चादयो यथा—क्रुञ्चा, देवविशा ; ऋचि पादान्तात् Compoundwords having पाद as the last word, when apply to Vedas come under this rule. द्विपदा, त्रिपदा वा गायत्री। अन्यत्र Note in other cases द्विपदी, द्विपद्, "त्रिपदोच्छ्रेदिनामपि" we find also गायत्री सैकपदी द्विपदीत्यपि दृश्यते। गिरादेर्वा। This rule is optionally applied to words गिर् &c. गिर्, गिरा ; वाक्, वाचा ; दिक् दिशा ; क्षुत्, क्षुधा, उष्णिक्, उष्णिहा, पाणिनिना "अजाद्यतष्टाप्" इति सूत्रं कृतम् पाणिनि reads अजादि instead of क्रुञ्चादि, अजा, एडका, अश्वा, चटका, मूषिका एवं बाला, वत्सा,

---

(१) By the predicative compound we must understand any compound wich is used attributively with the qualifying words understood so it includes बहुव्रीहि, द्विगु &c.

क्रोड़ा, मन्दा, विज्ञाता, ज्येष्ठा, कनिष्ठा, मध्यमा, कोकिला चटका, स्त्र्यपत्ये चटिका, दारक—दारिका, भर्तृदारिका, वरट-वरटा "नवप्रसूता वरटा तपस्विनी" वर्त्तक—वर्त्तिका, सौविदल्ल-सौविदल्ला—"रचणसौविदल्ला।" मूषिका, शिवा "अशिवैः शिवारुतैः" इत्यादि।

२। ऋदुगिद्दिनोङीः।

ऋदन्तात्, उगितः, इनन्ताच्च स्त्रियां ङीः स्यात् Words ending in ऋ, or इन्, as well as having उक् (उ, ऋ,) rejected take ई in the feminine ऋदिनन्तशब्दास्तु प्रायो विशेषणानि, तेषामुदाहरणानि दर्शितानि च Words ending in ऋ or इन् are generally adjectives, we have already shown their examples as दात्री, कर्त्री &c. उगितो यथा यत्+डावतु यावती, किम्+डियतु कियती, भू+डवतु—भवती, भू—शतृ भवन्ती, दीव+शतृ दीव्यन्ती, अश+शतृ अश्नती, मनन्तमातृपञ्चादेर्न Substantives in मन्, and the words मातृ and पञ्च &c. are excepted मनन्तात् पामा, सीमा, मात्रादि यथा माता, दुहिता, स्वसा, ननान्दा, याता, तिस्रः, चतस्रः, पञ्चादि—यथा पञ्च, सप्त, नव स्त्रियः एवं प्रियपञ्चानो वेश्याः।

३। गौरादेः।

गौरादेर्ङीः स्यात्।

Words गौर &c. take ई in the feminine gender गौरी, कुमारी, पितामही, मातामही, शुनी, प्लवी, चौरी, मत्सी, पृथिवी मानुषी, नर्त्तकी, गायनी &c. "वाद्यं विना नर्त्तकी" "तदङ्गभोगाः

वलोगायनीनां", चारी "प्रचार इत्याकलनाय चारी" गणकशब्दस्य तु गणिकेति रूपं भवति "एषोहि गणिकामातुरधिकारः।"

४। जातिः

जातेः सामान्यवचनात् ङीः स्यात्।

Animals and their various divisions generally take ई in the feminine. कुक्कुटी, विहङ्गी, मृगी, दूती, पूतनी, भ्रमरी, ब्राह्मणी, वृषली, नटी, कठी, हयी, गवयी, मुकयी, मत्सी, चक्रवाकी "सरिदपरतटान्तादागता चक्रवाकी" गोपी "गोपीभर्त्तुर्विरह-विधुरा" "स्तम्बेरमी" सिंही, इभी "कारेणुरिभ्यां स्त्री" रासभी, शृगाली, करभी "वामी शृगाली, वड़वा रासभी करभीषु च" टिट्टिभी, यक्षी, देवी, गन्धर्व्वी, विद्याधरी, किन्नरी, "यक्षी वा यदि वा देवी, गन्धर्व्वी यदिवाऽप्सराः। विद्याधरी किन्नरी वा" इति महाभारतम्। There are a few words in आ without corresponding masculine words. यथा मक्षिका, पिपीलिका, वलाका, वड़वा, करटा एता नित्यस्त्रियः। वैश्यादेस्तु आप् स्यात्, वैश्य &c. are excepted and take आ in the feminine gender वैश्या, क्षत्रिया शूद्रा "वैश्याजः साऽर्द्धमेवांशम्" "सुक्षत्रिया क्व भवती क्व च दीन-तैषा" अजादयस्तु वैश्यादौ अज &c. are also included in to वैश्य class अजा, अश्वा, एड़का, कोकिला "कोकिला मञ्जुवादिनी" अजाया अप्रसूताया मांसं पौनसनाशनं स्वार्थ इत्येव Note when they are attributive प्रियकुक्कुटा मयुरा।

५। प्रायेणाल्पविवक्षायाम्।

Words denoting littleness are generally feminine ending in ई. अल्पछत्रं छत्री, पत्री, मृणाली, दण्डीत्यादि।

६। इतो नृजातेः।

इदन्तान्नृजातिवाचिनः स्त्रियां ङीः स्यात्।

Words ending in इ applied to women generally lengthens the final vowel.

अवन्ती, कुन्ती, नृजातेरितिकिम्? तित्तिरिः

७। एरक्तिनर्थात्।

इवर्णान्तात् ङीर्वा स्यात्।

Words in इ optionally lengthens their final vowel in the feminine. रात्रिः, रात्री, धूलिः, धूली; भूमीः, भूमि; युवतिः, युवती; यष्टिः, यष्टी; पद्धतिः, पद्धती; अस्त्रे—शक्तिः; शक्ती; वस्तिः वस्ती; श्रीयं, लक्ष्मीयमिति दुर्घटरचितः. According to दुर्घट रचित श्री and लक्ष्मी come also under this rule, so he recites examples श्रीयं लक्ष्मीयं instead of श्रीरियं।

अक्तिनर्थात् Words in क्ति are excepted गतिः, शक्तिः हानिः अकरणिः काङ्क्षारिमकार्षीः पाणिनिना वह्वादिषु चेति सूत्रं कृतं Panini reads वहु &c. under this rule तन्मते बह्वी वहुः।

८। वयसि प्रथमे।

प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीः स्यात्।

Words ending in अ and implying youth take ई in their feminine. कुमारी, वधूटी चिरण्टी, "गोपवधूटी दुकूलचौराय" वधूटी रक्षोभ्यो वलिरिव वराकी प्रणिहिता। वधूट, चिरण्टशब्दौ यौवनवाचिनौ the words वधूट and चिरण्ट mean the young age, कन्यायाः कनीन चेति निर्देशात्, The कन्या is excepted एवं वालादयोऽपि so are वाला, वत्सा, डिम्भा, पाका all meaning a

young woman. अश्वतर वत्सतरयोस्तु यथाक्रमं अश्वतरी, वत्सतरीतिरूपं भवति, अश्वतर and वत्सतर come under this rule. तथा "करभाश्वतरीषु च"

८। पुंयोगात्तन्नाम्नो नित्यमसूर्य्यादेः।

पुंयोगात् स्त्रियां वर्त्तमानात् पुन्नाम्नो नित्यं ङीः स्यात्।

When nouns originally implying a male applied to a female take ई. While the words सूर्य्य &c. are excepted. यथा गणकस्य भार्य्या गणकी गोपस्य भार्य्या गोपी, शूद्री, वैद्यी, क्षत्रियी, गणिका वेश्या we find गणिका meaning a public woman सूर्य्य &c. take आ instead of इ, सूर्य्या, गोपालिका, अश्वपालिका, ज्येष्ठा, कनिष्ठा, मध्यमा, सूर्य्यस्य देवताभिन्नभार्य्यार्थे तु सूरीति रूपं भवति। We find also सूरी in the sense of a wife of the sun but not a goddess. वक्ष्यमाणेषु विशेषा लक्षणीयाः—note the following distintions—शूद्रा (a woman of शूद्र class) शूद्रजातीय कन्यकेत्यर्थः "शूद्रा भार्य्योपदिश्यते, शूद्रस्य भार्य्या इत्यर्थे तु शूद्री means the wife of a शूद्र; न शूद्रा क्षत्रिया सूयते" महाशूद्रा (शूद्रजातीयमहत्तरा) a great Sudrawoman, while महाशूद्री means a cowhrdess आभिरी तु महाशूद्रीत्यमरः एवं अर्य्या or अर्य्याणी वैश्यजातीयास्त्री a Vaisya woman, आर्य्यस्य पत्नी अर्य्यी, (the wife of a Vaisya), उपाध्याया (a female tutor), उपाध्यायस्य भार्य्या इत्यर्थे (the wife of a preceptor) both उपाध्याया and उपाध्यायानी, तथा वैश्यजातीयायां वैश्या (a Vaisya woman), वैश्यी (wife of a Vaisya). मातुलस्य स्त्री मातुलानी, मातुली ; मघवतः स्त्री मघोनी खर्व्वभावमवलम्ब्य मघोनी

इन्द्रस्य स्त्री इन्द्राणी (Indra's wife) वरुणस्य स्त्री वरुणानी (Varuna's wife), भवस्य स्त्री भवानी (the wife of भव) रुद्रस्यस्त्री रुद्राणी Rudra's wife) शक्रस्य स्त्री शक्राणीति केचित् (Sakra's wife) एवं मृड़ाणीत्यपि ; ब्रह्मण: स्त्री ब्राह्मी, ब्रह्माणीत्यपि ; मनो: स्त्री मनावी, मनायी, (the wife of Manu) अग्ने: स्त्री अग्नायी एवं पूतक्रतायी, वृषाकपायी, कुसितायी, कुसीदायीत्यादि ।

वक्ष्यमाणेषु स्त्रीपुंसयोर्भिन्नस्वारूप्यं ।

In the following the feminine forms differ from that of the masculine.

| पुं (n) | स्त्री (n) | उदाहरणानि |
|---|---|---|
| पितृ | मातृ एवं | धात्री स्यादुपमाता वीरमाता तु वीरसू: |
| | विमातृ, उपमातृ &c. | न सपत्नीमातृपरत्वं |
| भ्रातृ | स्वसृ | |
| जामातृ | स्नुषा | |
| श्वशुर | श्वश्रू | |
| पति | पत्नी | |
| सखि | सखी | |
| युवन् | युवती, युवति, यूनीत्यपि | |
| शुक | शारी वा शारिका. | |
| श्वन् | शुनी | |
| अनडुह् | अनडुही, अनड्वाही | |

एतदपि द्रष्टव्यम् note also महत् हिमं हिमानी, महत्

अरण्यं अरण्यानी "महारण्यमरण्यानीत्यमरः" दुष्टयवे यवानी, यवनानां लिपिर्यवनानी ।

१० । ऊङ् ऊतोऽयूपधात् ।

यूकारोपधाभिन्नादुकारान्तान्मनुष्यजातिवाचिन ऊङ् स्यात् ।

Words ending in उ (implying man kind) except in यु lengthen their final vowel वधूः, बन्धूः, कुरूः, कारूः note अयूपधादिति किम् अध्वर्युर्ब्राह्मणी । क्वचित् स्त्रीयोषिदित्यादिशब्दसाहचर्य्येणापि स्त्रीत्वं प्रकाश्यते । In some instances feminines of people and animals are generally expressed with the addition of a word meaning woman यथा "मलं पृथिव्या वाह्लीकाः, स्त्रीणां मद्रस्त्रियो मलं" "शीघ्रमानय गान्धारीं सर्व्वाश्च भरतस्त्रियः" "सर्व्वथा वृष्णिदारास्तु वालं वृद्धं तथैव च ।" "मृगवधूवैधव्यदानदक्षैः श्वभिः, कौलेय कुटुम्बिनीभिरनुगम्यमानः । अहो निवत्स्यति समं हरिणाङ्गनाभिः ।" परभृतयुवतिः स्वनं वितेने" "गोधेनूनां चतुःशतं ।" "खड्गि धेनुकानां ।"

इति श्रीहृषीकेशकृतौ लिङ्गविवेकः सम्पूर्णः ।

---

